श्रीनेमि-विज्ञान-ग्रन्थमालारत्न-२४

कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यकृतपरिशिष्टपर्वणो गद्यानुबन्धः ।

# श्रीपरिशिष्टपर्व ।

गद्यानुबन्धक

तपागच्छीय-शासनसम्राट्-पूज्यप्रवरआचार्यश्रीमद्विजयनेमिसूरीश्वर-पट्टालङ्कार-पूज्यपादाचार्य-श्रीविजयविज्ञान
सूरीश्वर-पट्टविभूषकाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्नपन्यासप्रवरश्रीयशोभद्रगणिवरशिष्य
पन्न्यासप्रवरश्रीशुभङ्करविजयगणिवरः ।

प्रकाशकः—शा अमृतलाल शीवलाल लींचवाला

वीरसंवत्-२४८२ * * * मूल्यम् ५-०-० * * * विक्रमसंवत्-२०१२

प्राप्तिस्थान —
शा जसवंतलाल गीरधरलाल
ठे रुपासुरचंदनी पोळ
अमदावाद

प्राप्तिस्थान —
श्री सरस्वती पुस्तक भंडार
ठे रतनपोळ-हाथीखाना
अमदावाद

प्राप्तिस्थान —
शा अमृतलाल शीवलाल लींचवाळा
ठे बीजो भोईवाडो नं ४२
मुंबई नं २

मुद्रक —
शाह गुलाबचंद लल्लुभाई
श्री महोदय प्रिन्टींग प्रेस
दाणापीठ-भावनगर

## પ્રકાશકીય.

સાહિત્યના પરમ ઉપાસક સમર્થ જ્યોતિર્ધર કલિકાલસર્વજ્ઞ આચાર્યશ્રીમદ્ હેમચન્દ્રસૂરીશ્વરજી મહારાજશ્રીએ સંસ્કૃત અને પ્રાકૃત ભાષામા જુદા જુદા અનેક વિષયોના સાહિત્ય ગ્રથોનુ નિર્માણ કરી વિશ્વને સાહિત્યનો મહાન્ વારસો આપ્યો છે.

તેઓશ્રીનો એકેએક ગ્રથ વિશ્વ સાહિત્યમા પ્રથમ પક્તિનો ગણાય છે અને સાહિત્ય ખજાનાના રત્નો તુલ્ય મનાય છે.

આચાર્યશ્રીએ "ત્રિષષ્ટિ શલાકાપુરુષ ચરિત્ર"ની રચના કરી છે જેમાં તીર્થંકરો, ચક્રવર્તિઓ, બળદેવો, વાસુદેવો અને પ્રતિવાસુદેવો વિ. ૬૩ શ્રેષ્ઠ પુરુષોના ચરિત્રો સુંદર રીતે આલેખાયેલા છે. આ એક વિશાળ પુરાણ ગ્રંથ છે. આમા "જૈન રામાયણ અને મહાભારત" પણ અંતર્ગત થાય છે. આ બધા ચરિત્રો દશ પર્વોમા રચાયેલા છે, (ગોઠવાયેલાં છે) અને તેની પૂર્તિરૂપે એક 'પરિશિષ્ટ પર્વ'ની અલગ રચના કરી છે આ ગ્રંથમાં ભગવાન મહાવીર પ્રભુ પછી થયેલા ધર્મના ધોરી એવા આચાર્ય ભગવતોના જીવનચરિત્રો ઘણા જ સુદર રીતે આલેખાયેલા છે આ "પરિશિષ્ટ પર્વ" સંસ્કૃત ભાષામાં પદ્યમા રચેલુ છે. આ ગ્રંથ પણ અપૂર્વ કોટીનો છે અને તેથી ભારતના પ્રાચીન ઇતિહાસની ગવેષણામા અત્યંત ઉપયોગી થાય તેમ છે.

સ્વ અને પરના આત્મકલ્યાણ માટે ચારિત્રધર્મને અંગીકાર કરી શુદ્ધ અને પવિત્ર જીવન જીવનાર આ મહાપુરુષોના જીવન શ્રદ્ધા અને જ્ઞાન, સાહસિકતા અને વીરતા, શાન્તતા અને ગભીરતા, સેવા અને વૈયાવૃત્ય આદિ સદ્ગુણોથી ભરેલા હતા.

આ મહાપુરુષો આપણી સાથે હૈયાત ન હોવા છતા પણ આજે તેમના જીવનચરિત્રો પણ આપણા જીવનમા સુવાસ ફેલાવે છે અને પ્રેરણાઓ આપી માર્ગદર્શકરૂપ બને છે.

કાદંબરી અને પંચતંત્રની કથાઓ જેમ જગપ્રસિદ્ધ અને લોકપ્રિય છે તેથી પણ અપૂર્વ શક્તિ અને સામર્થ્ય ધરાવતી કાલ્પનિક નહિ પણ સત્ય હકીકતથી ભરપૂર આ મહાપુરુષોની કથાઓ એક કાળે વધુ લોકપ્રિય હતી અને આજે પણ વિદ્વદ્વર્ગમાં એટલી જ લોકપ્રિય છે.

આ કથાઓ દ્વારા અનેકોએ પ્રેરણાના પાન કર્યાં છે તેમજ આ કથાઓએ અનેકોના જીવન પલટાવી નાખ્યા છે

જેણે જેણે વાંચી છે અને ધ્યાન દઇને સાંભળી છે, તેના જીવનમાંથી એકેય વાત કદી ભૂલાણી નથી કે બદલાયેલુ જીવન કદી ફરી પરિવર્તન પામ્યુ નથી.

કલિકાલસર્વજ્ઞ શ્રીમદ્ હેમચન્દ્રસૂરીશ્વરજીએ સંસ્કૃત–પદ્યમાં રચેલા ' પરિશિષ્ટ પર્વ 'ને સરળ ગદ્ય બનાવવાની આવશ્યકતા હતી, જેથી સંસ્કૃત સાહિત્યના અભ્યાસીઓને એક સુંદર કાદંબરી જેવા ગ્રંથનુ વાચન મળી શકે

પંન્યાસપ્રવર શ્રી શુભંકરવિજયજી મહારાજશ્રીએ આ કાર્ય માટે સતત પરિશ્રમ કર્યો અને તેના પરિણામે આ ગ્રંથ તૈયાર થયો અને આજે તેનુ પ્રકાશન કરવા અમે ભાગ્યશાળી બન્યા છીએ

પૂ. મહારાજશ્રીનો પરિશ્રમ અત્યંત સ્તુત્ય છે તેઓશ્રી સંસ્કૃત અને પ્રાકૃત સાહિત્યના ઊંડા અભ્યાસી છે અને તે ભાષા ઉપર સારો કાબૂ ધરાવે છે. પદ્યનુ ગદ્ય કરતા બને તેટલા સંસ્કૃત ભાષાના સરળ શબ્દો વાપરવાની તેઓશ્રીએ ખૂબ કાળજી રાખી છે,

પૂ. મહારાજશ્રીએ લીધેલા પરિશ્રમ બદલ આભાર વ્યક્ત કરુ છુ તેમજ આ ગ્રંથની સંપૂર્ણ ઉપયોગિતા સમજી

પૂ. મહારાજશ્રીના સદુપદેશ અને પ્રેરણાથી આ ગ્રંથના પ્રકાશન માટે આર્થિક સહાયતા આપનાર શ્રી વેજલપુર જૈનસંઘ તથા શ્રી ઘાણેરાવ ( મારવાડ ) જૈનસંઘ તથા અન્ય સહુકોઈનો સહૃદયપૂર્વક આભાર વ્યક્ત કરું છું.

આ સંસ્કૃત ભાષામાં સરળ ગદ્યમા તૈયાર થયેલા આ " પરિશિષ્ટ પર્વ " નામક ગ્રંથ સંસ્કૃત ભાષાના અભ્યાસી વર્ગમા હોશે હોશે વંચાશે તેમજ યુવાન વિદ્યાર્થીઓના જીવનઘડતર માટે અત્યંત ઉપયોગી એવી આ સંસ્કૃત સાહિત્યની કથાઓ શાળા અને કોલેજોના ઉચ્ચ અભ્યાસના વર્ગોમા ચલાવવામા આવતા સંસ્કૃત ગ્રંથોમાં યથાયોગ્ય સ્થાન પામશે એવી આશા રાખીએ છીએ

મતિ દોષથી કે પ્રેસ દોષથી જે કંઈ ભૂલ રહેવા પામી હોય તેની ક્ષમા યાચીએ છીએ, એ જ શુભાભિલાષા.

મૌન એકાદશી વિ સં. ૨૦૧૨.

લી૦ પ્રકાશક.

## गद्याऽनुबन्धकीय किञ्चित्—

विदितचरमेवैतद्विद्वद्वराणां यत्पुण्यश्लोक कलिकालसर्वज्ञ तत्र भवान् श्रीहेमचन्द्राचार्यैः स्थविरावलीचरित्ररूपं त्रिषष्टिशलाका पुरुषचरित्रपरिशिष्टनामकं परिशिष्टपर्वग्रन्थं जग्रन्थेति । तत्र सर्वत एवास्य प्रसिद्धत्वात् सार्वभौमश्रीहेमचन्द्राचार्यपरिचयकीर्तन दीपेन भास्वद् वेरणमिवेति तत्र मूकतैव वरम् । स एष ग्रन्थः ऐतिह्यात्मकोऽपि पुण्यचरितमहाप्रभावजैनशासनप्रभावकलोकविख्यात सूरीश्वराणामनुकरणीयानुसरणीयबोधनीयजीवनचरित्रकथनद्वारेण मनोऽनुरञ्जयन्निव सुतरां सत्पथे प्रेरयति जनान् वाचकान् । इत्यन्ते चातस्तदध्ययने साभिनिवेशाः स्वाध्यायपरायणा वर्तमाना सविशेषं जिज्ञासवः । किन्तु व्युत्पन्नवाक्त्वेन श्लोकादिरचनानामर्थ गम्भीरत्वयोक्तिवैचित्र्येण प्रयोगचातुर्येण च तस्मिन्नसुबोधतया व्युत्पन्नमतीतरे उत्तालतरङ्गे इवे गभीरे उत्तरणापटव इव सीदन्ति कतिपये । तादृक्कोमलमतिजनसौकर्याय प्रागपि तादृशपद्यप्रबन्धानां परोपचिकीर्षव सूरयो गद्यानुबन्ध व्यदधन्निति लब्धाऽवका ऽहमपि तथा भावये, यत्फलरूपेण सम्पन्नोऽयं परिशिष्टपर्वगद्यानुबन्धः । अत्र च दुरूहार्णां प्रयोगाणां सुबोधे प्रसिद्धैः प्रयोगैर्यावलगम्यानां कुशाग्रबुद्धीनामप्याशयानामाविष्करणैश्च सरलमतिबोधसौकर्यं नाऽल्पमपि सन्देहगन्धोऽपि । किन्तु प्रमादस्य मनुष्यस्वभावसुलभतया सम्भवन्त्य काश्चित्स्खलना सुहृदयैः सहृदयैः समाधानविधयैव क्षन्तव्या इत्याशास्ते—

पन्न्यास-शुभङ्करविजयो गणिः ॥

# कथानुक्रमणिका

# शुद्धिपत्रकम्

| पृष्ठम् | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ३ | पर्द | पद |
| २ | १ | प्रजास्तु | प्रजाश्च |
| २ | २ | सुव्रता | × |
| २ | ६ | सुरैरेकृत | सुरैराकृष्य स्थापित |
| २ | ७ | देवा | देवास्तत्र |
| ३ | ९ | श्वेतवक्षे क्षीरोदलहरी | क्षीरोदलहरीष्यूते इव |
| | | ष्यूते इव | श्वेतवक्षे |
| ३ | १ | हस्त्यश्वादि *यानानि* | हस्त्यश्वादियानानि |
| ८ | १ | ऽस्वेष्टपता | ऽस्वेष्टगता |
| ८ | ९ | सुभाव | स्वभाव |
| ८ | १२ | देशप्रमाण | देश प्रमाण |
| १२ | २ | शालेमि | शालेभि |
| १२ | ७ | निरविषात् | निरविशत् |
| १२ | १२ | प्रवर्तते | प्रावर्तत |

| पृष्ठम् | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४ | २ | महिषीना | महिषीणा |
| १४ | ९ | भाह्ममत्न | आहूमम च |
| १७ | १ | राष्ट्रकूतो | राष्ट्रकूटो |
| १७ | १० | नैष्टुर्ये | नैष्ठुर्य |
| १७ | १ | मक्षितो | भक्षितो |
| २१ | ११ | मेघमण्डल | मेघमण्डले |
| २६ | ७ | प्रभागच्छतोऽस्मि | अद्भुमागतोऽस्मि |
| २ | ८ | मासद्य | मासाद्य |
| ३१ | ६ | सार्धमास | साधमास |
| ३१ | ७ | मुक्ताचूर्णैव | मुक्ताचूर्णैरिव |
| ३१ | ८ | दूर्वाऽङ्कुरे | दूर्वाङ्कुरे |
| ३२ | १ | क्रमाक्रमेण | क्रमा क्रमेण |
| ३२ | १ | कन्याजम्बू | कन्या जम्बू |
| ३४ | ५ | कौतूकं | कौतुकं |

| पृष्ठम् | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६ | १ | छत्रघारी | छत्रधारी |
| ४१ | १२ | मूर्मिका | मूर्मिका |
| ४२ | १ | भातृभाण्डे | भ्रातृभाण्डौ |
| ४७ | ६ | युतास्थीने | युतास्थीनि |
| ४९ | १२ | एकं गिरिकूटमिव | एको गिरिकूट इव |
| ५२ | ९ | वाणीकूप | वापीकूप |
| ५३ | १३ | अस्यागृह | अस्या गृह |
| ५४ | २ | युवेका | युवैका |
| ५५ | ५ | जलारोपण | जलजारोपण |
| ५५ | १३ | वधावाताम् | वधावताम् |
| ६० | ११ | ल | त्वा |
| ६२ | ११ | हस्तिक | हस्तिपक |
| ६३ | ४ | वर्षवर्यन्तं | वर्षपर्यन्त |
| ६४ | १ | घितविद्यो | धितविद्यो |
| ६६ | ७ | वर्यधिक् | अस्मान् धिक्, |
| ६६ | ८ | पीडयन्त यथा | पीडयन्तो यथा |

| पृष्ठम् | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६६ | ८ | गोस्तनात् | गोस्तनान् |
| ६६ | ८ | लयन्तश्चौरकुञ्जरा | लयन्त |
| ६७ | ११/१२ | मानो तौ | मानौ |
| ७२ | २ | स्निग्धदन्तोऽय किशोर | स्निग्धदन्त |
| ७२ | ४ | अथवा मम | अथवा |
| ७२ | १३ | वव्रृधे | ववृधे |
| ७४ | ५ | आगच्छञ्जिन | आगच्छञ्जिन |
| ७५ | ९ | नामपुरुष | नाम पुरुषं |
| ७५ | १४ | धात्रिभि | धात्रीभि |
| ७६ | ७ | मा साहस | मासाहस |
| ७९ | २ | चार वारेण | वारवारेण |
| ८१ | ५ | वपु निर्वापयसि | वपुर्निर्वापयसि |
| ८२ | १३ | शववद् | शववद् |
| ८५ | ९ | वदनार्थं | वन्दनार्थं |
| ८५ | १३ | पदान | पादान् |
| ८९ | ८ | | नगरे |

| पृष्ठम् | पंक्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९२ | ४ | क्व न नामास्ति ! | क्व नामास्ति ! |
| ९५ | ११ | नगरऽऽरामे | नगराऽऽरामे |
| ९५ | १२ | वेतुर्यमामे | ते दुर्यमामे |
| ९६ | २ | ख्यानीनृप | ख्यातिनृप |
| ९६ | ११ | निवापस्यत् | निवापस्यन् |
| ९६ | १२ | ते चिन्तयन् | तेऽचिन्तयन् |
| ९८ | १४ | स्वदधीना | तदधीना |
| १ | ६ | निर्वारयन्ती | निवारयन्ती |
| १ १ | १२ | भद्र ! | भद्रे ! |
| १ १ | १३ | स्वर्णप्राप्ति | स्वर्णप्राप्ति |
| १ २ | २ | स्त्री चूडा | स्त्रीचूडा |
| १ २ | ५ | शरीर | शरीर |
| १ ४ | ८ | मसेनत् | मसेनत |
| १ ६ | ९ | कुष्णी | कुष्णी |
| ११२ | १ | गच्छेत्सर्व | गच्छेत्येव |
| ११२ | २ | यत्ते | यतो |
| ११३ | १४ | एक कणे | एककणे |
| ११४ | १२ | छिन्या | छित्वा |
| ११६ | ४ | पुरश्छकः | पुरश्छक |
| ११७ | १२ | पुष्ठे | पृष्ठे |
| ११९ | १४ | मदीयं ममादेशं | मदीयं यदीममादेशं |
| १२ | २ | श्लोदयो | श्लोकयो |
| १२ | १३ | जने नारके | जनैर्नारके |
| १२२ | १ | सम्भूतविजया | सम्भूतिविजया |
| १२६ | ७ | संचाराद्दुग्ध | संचाराद् दुग्ध |
| १२८ | १४ | सम्रक्षेपं | सङ्क्षेपं |
| १२९ | ८ | पिधानेनव्यधात् | पिधानेन व्यधात् |
| १३ | १२ | धीरचन्द्रगुरुगणो | धीरचन्द्रगणो |
| १३१ | २ | चन्द्रसागराद् | चन्द्र सागराद् |
| १३१ | ६ | पुनरुक्त | पुनरुक्त |
| १३१ | १२ | मह्येऽप्युवाच | मह्येऽप्युवाच |
| १३१ | १२ | लभत्येव | कर्तत्येव |

नमोत्थु णं समणस्स भगवओ महावीरस्स

। परमपूज्यश्रीनेमि-विज्ञान-कस्तूरसूरि-पन्न्यासयशोभद्रगुरुवरेभ्यो नमः ।

। कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यकृतपरिशिष्टपर्वणो ।

# गद्यानुबन्धः

# 卐 श्रीपरिशिष्टपर्व 卐

## प्रथम सर्गः

वन्दे महावीरजिनं वरेण्यं स्वर्गापवर्गद्रुमराजकन्दम् ।
सुरासुरैः पूजितपादपद्मं वचोऽमृतांशूद्धृतहृत्तमस्कम् ॥ १ ॥
यद्धैमचन्द्रं परिशिष्टपर्व श्रीनेमिविज्ञानपदाब्जभृङ्गः ।
शुभङ्करोऽहं विदधे तदेव गद्यानुबद्धं सुखबोधहेतोः ॥ २ ॥

अस्यैव जम्बूद्वीपस्य दक्षिणे भरतार्द्धे भूमिसुखमण्डन मगधनामा देशोऽस्ति, तस्मिन् मगधदेशे गोष्ठा ग्रामसदृशाः, ग्रामाश्च

सुरसदृशा, पुराणि चाद्भुतलक्ष्म्या खेचरनगरसदृशानि, तत्र कृषीवलैरेकवारमुप्तानि धान्यानि पुनः पुनर्दूर्वावत् प्ररोहन्ति, प्रजास्तु सुषमाकालभवा इव नीरोगा निर्भया सन्तुष्टा दीर्घायुषस्तत्र वसन्ति । गावस्तत्र सदा प्रसववशालिन्यः कुण्डोध्न्य सुभगा अहर्निशं कामधेनव इव कामदोह्या । भूमिश्च सर्वत्रोर्वरैव । समये मेघो वर्षति । तस्मिन् धर्मैकगेहे मगधदेशे सर्वो लोको धर्मकर्मपरायण ।

तत्र देशे दक्षिणभरतार्द्धस्य सर्वस्वनिधिभूमिरिव लक्ष्मीक्रीडागृहं राजगृह नाम नगरमस्ति । तत्र सौवर्णध्वजकुम्भमरीचयो वर्षासु विद्यमानमेघाना विद्युल्लताभ्रमं जनयन्ति । तत्र चन्द्रकान्तमणिनिर्मितवासगृहसंक्रान्तचन्द्रो रात्रौ कस्तूरीपूर्णमुकराजतपात्रायते । तत्र सुन्दराकृति सौवर्ण प्राकारोऽर्हत्समवसरणात् सुरैरेक कृत इव शोभते । तत्र वापीजल द्वयो पार्श्वयोर्मिलद्भी रत्नसोपानकिरणैर्बद्धसेतुवत् प्रद्योतते, तत्र हर्म्येषु कन्या क्रीडाशुकानपि जिनस्तवनानि नित्य पाठयन्ति । तत्र रात्रिषु जिनमन्दिरशिखरचुम्बीनि स्वर्णकुम्भप्रतिबिम्बितानि नक्षत्राणि प्रकाशन्ते । तत्र प्राकारो रजतसुवर्णकृतै कपिशीर्षैश्चन्द्रसूर्यबिम्बै सुमेरुगिरिरिव भासते । तत्र वासगेहे दग्धधूपगन्धाधिवासित पवन खेचरीणामङ्गे क्षिप्यन् प्रियतम इव हर्षाय जायते । तत्र चतुरो नेतेव गुणै पृथ्वी लक्ष्मी चावर्जयन्नुपचितयशा श्रेणिको राजाऽभूत् । तस्य मनसि प्रसरता सम्यक्त्वरत्नप्रकाशेन मिथ्यात्वान्धकारस्याऽल्पोऽप्यवकाशो नाभूत् । तस्य कीर्तिं सुधर्माऽभ्यन्तरेऽप्सरोभि कर्णपुटपेया विलक्षणा सुधेव देवानां हर्षं ददती सत्यगीयत । तस्मिन् केन्द्रे दुष्टग्रहवत् प्रतिकूले सति तस्य शत्रव आपद प्रापु । अखण्डशासने शक्रतुल्ये तस्मिन् राज्ञि पृथ्व्येकचन्द्रा द्यौरिवैकच्छत्राऽभूत् ।

तस्य जन्मारभ्य सामुद्रलक्षणवत् औदार्यधैर्यगाम्भीर्यशौर्यादयो गुणा अजायन्त । महापराक्रमस्य तस्यैकच्छत्रां पृथिवीं कुर्वत पुरन्दरवज्रमिवाज्ञां कोऽपि नोल्लङ्घ ।

एकदा तस्य राज्ञ पुरासन्ने गुणशिलनामकोद्याने सुरासुरपरिवारसहितो भगवाञ्छ्रीमहावीरस्वामी समवासरत् । तदा देवा गुणशिलोद्याने त्रिभी रूप्यस्वर्णमणिमयै प्राकारैरलङ्कृतं समवसरणं चक्रु । तत्र व्यन्तरसुराः पवनान्दोलितपल्लवैर्भव्यजनानाह्वयन्तमिवाशोकवृक्षं विचक्रुः । तस्मिन् समवसरणे पुरुषाकृतिः सुमेरुरिव जात्यसुवर्णवर्णो भगवाञ्छ्रीमहावीरप्रभुः पूर्वद्वारेण प्राविशत् । श्रीमहावीरस्वाम्यशोकवृक्षाध स्थितदेवच्छन्दे राजहसः कमलमिव सिंहासनं यथाविध्यलञ्चकार। तत्र चतुर्विध सङ्घो यथास्थानमुपविवेश । श्रीमहावीरप्रभुरमृतवर्षासदृशीं धर्मदेशना प्रारेभे । तद्देशवासिनो जनाः शीघ्रं प्लवमाना मृगा इव समवसृतं श्रीमहावीरस्वामिनं राजान्तिकमुपेत्य राजान व्यज्ञपयन् । तदा वीरस्वामिसमवसरणसमाचारामृतं श्रवणपुटेन पीतवतस्तस्य शरीरं पनसफलमिव हर्षेणोद्गतकण्टकं बभूव । ततः श्रेणिको राजा सिंहासनं पादुके च त्यक्त्वा श्रीमहावीरप्रभुं मनसिकृत्य भून्यस्तमस्तकः प्रणनाम । राजा स्वाम्यागमनसूचकेभ्यो जनेभ्य· पारितोषिके दैन्यदूरीकरणकारणं बहु सुवर्णं ददौ ।

अथ श्रेणिकनृपो जिनवन्दनयोग्ये सदृशे श्वेतवस्त्रे क्षीरोदलहरीव्यूते इव पर्यधात् । तदा राजगृहपतिर्मुक्तैर्बहुभिर्मुकुटादिभी रत्नभूषणैः कल्पतरुरिव शुशुभे । तदा तस्य बन्धवस्तदाज्ञया हस्त्यश्वादि यानानि सज्जीकृतानि राजद्वारे शीघ्रमुपास्थापयन् ।

अथ राजशिरोमणिः श्रेणिकस्तेजस्वी सूर्य उदयाचलमिव कल्याणकारणं भद्रकुञ्जरमारुरोह । राजा सन्ध्यामेघसदृशैरनेकैर्नवसिन्दूरारुणकुम्भैर्गजैः परिवव्रे । ततोऽप्युत्सुको नृपो गजघण्टाटणत्कारैराकाशं पूरयन्निव श्रीमहावीरतीर्थपतिम्प्रति चचाल । गजेन्द्रगर्जितैरश्वहेषितैश्च मिलद्भिराकाशतले शब्द आकाशगुणोऽभूत् ।

## प्रसन्नचन्द्रराजर्षिकथा ।

तत्र श्रेणिकस्य द्वौ प्रधानसैनिकावेकमेकाग्रचित्तमेकपादेनैकमूलं वृक्षमिव स्थितं सिद्धिक्षेत्रमाक्रष्टुमिवोर्ध्वीकृतभुजयुगं दर्पण इव सूर्येऽपि निश्चलन्यस्तनेत्रं सूर्यतापात्स्वेदबिन्दुभिर्जातजलस्फोटकमिव मूर्तमिव शान्तरसं शान्तं मुनिवरं ददृशतुः । तयोर्द्वयोः सैनिकयोरेकतरोऽवोचदहो ! मुनिवर एवं तपस्तप्यते, सोऽयं मुनिशिरोमणिर्महात्मा धन्योऽस्ति, एतदन्यः क एकपादेन तिष्ठेत् ? को वा सूर्यमण्डलं मुहूर्तमप्येवं पश्येत् ? अहो ! अहो ! अस्य दुष्करकारित्वम् । अस्य महात्मनः स्वर्गो वा मोक्षो वा न दूरे, महता तपसा किं किमसाध्यं न साध्यते ? । तत्र द्वितीयसैनिक उवाच—हे मित्र ! त्वं किं न जानासि ? अयं प्रसन्नचन्द्रो राजाऽस्ति । अस्य धर्मो नास्ति । अस्य तपो वृथाऽस्ति । अयं बालं पुत्रं स्वराज्येऽस्थापयत् । स मन्त्रिभिर्वृक्षादपक्वफलमिव राज्यादपनेष्यते । अनेन मार्जाराणां दुग्धमिव दुरात्मनां तेषां मन्त्रिणां रक्षणाय राज्यं समर्पितम्, तस्मिन् बाले पुत्रे नाशितेऽस्य वंशोऽप्युच्छेदितः स्यात् । अतो निजपूर्वपुरुषाणां नामनाशनादयं पातकी स्यात् । प्रव्रज्यां जिघृक्षुणाऽनेन या राज्ञ्यस्त्यक्तास्तासां पतिरहितानां का गतिर्भविष्यतीति न जाने ? । कर्णकोटरप्रविष्टेन तद्वचनप्रचण्डवातेन प्रसन्नचन्द्रराजर्षेः समाधितरुर्भग्नोऽजनि । तत एव स व्यचारयत्—“ अहो ! तेषां दुराशयानां मन्त्रिणां मन्मया सत्कारो व्यधायि तद् ध्रुवं भस्मनि हुतम् । मम पुत्रस्य स्तनन्धयस्य वै कुमतिभिः पापकर्मभिर्यद् राज्यं विनाशयितुमारेभे तद् तान् विश्वस्तघातकान् धिक् । यद्यहं तत्र राज्येऽभविष्यं तदा तेषां दुरात्मनां नवनवैर्निग्रहैरनुशासनमकरिष्यम् । अहो ममानेन जीवितेन किं ? किं वा भूयसा तपसा ? यत् स्वपुत्रस्य पराभवः श्रवणपथमगात् । ”

एवं स राजर्षिर्दुर्ध्यानमत्यन्तं कुर्वाणो निजसाधुत्वं व्यस्मार्षीत् । सिंहावलोकनन्यायेन क्षत्रतेजसाऽऽक्रीडः स प्रत्यक्षानिव पुत्रद्वेषिण-

स्तानमात्यानद्राक्षीत् । प्राग्वद्रणरङ्गैकसूत्रधारः खड्गधारया रणे तान् सूरणानिव खण्डशो मनसा चकार । अपि च छेदनं भेदनं दारुणतरमन्यदपि दुष्कर्म क्रोधान्धः सन् स राजर्षिर्मन्त्रिणा किं किं नाकर्षीत् ? ।

तत्र प्रदेशे जिनधार्मिक श्रेणिको राजगृहाधिप आजगाम । त मुनिमवलोक्य स राजकुञ्जरः कुञ्जरादुत्ततार, भून्यस्तमस्तको मुनिवरं प्रणनाम च । ततो राजोर्ध्वबाहुमेकपादस्थ तपस्यालीनं तं मुनिमवलोक्यातिप्रमुदितोऽन्वमोदिष्ट । प्रसन्नचन्द्रराजर्षेरद्भुतं तप सामर्थ्यं विचारयञ्छ्रेणिको भूपो जगद्गुरुजिनसमीपमापत् । राजा पञ्चाङ्गस्पृष्टभूपृष्ठः स्वामिनं वन्दित्वा कमलमुकुलितपाणिर्यथास्थानमुपाविशत् । अवसरमासाद्य राजशिरोमणिर्जगद्गुरुं वस्त्राञ्चलाच्छादितमुखद्वार एवमप्राक्षीत् ।

" यस्मिन् समये ध्यानावस्थितो राजर्षिः प्रसन्नचन्द्रो मया निरैक्षि तादृश एव स कालधर्मं कुर्यात् तदा कां गतिमवाप्नुयात् ? "

एतन्निशम्य स्वाम्याह–" यदि स नरेन्द्रस्तदा विपद्येत तदा सप्तमीं नरकभूमिं गच्छेत् " सरलमती राजा श्रमणाराधकः प्रभुवचनेन चिन्ताकुलितो व्यचारयत्–" अहो ! अत्युग्रतपसोऽस्य कथ दारुणा नरकावनिः ? स्यात् " ततो भूपतिर्भूयः स्वामिनं पप्रच्छ–हे प्रभो ! अस्मिन् समये स यदि कालं कुर्वीत तदा का गतिं प्राप्नुयात् ? " प्रभुरुदतरत्–" हे राजशिरोमणे ! अधुना स राजर्षिः परमतपाः सर्वार्थसिद्धनामविमानारोहणयोग्यो विद्यते " । राजा सविस्मयमाह–" भगवन् ! द्विविधा किमियं भवतां वाणी ? सर्वज्ञवाक् कदापि मिथ्या न भवति, अतोऽज्ञस्य मम रहस्य कथय । एतदाकर्ण्य स्वामी प्राह–" राजन् ! यदा त्वयाऽसौ वन्दितस्तदा स रौद्रध्यानपर आसीत्, साम्प्रत तु शुक्लध्यानपरायण इति । तदा रौद्रध्यानान्नरकार्हः शुक्लध्यानाच्चाधुना स सर्वार्थसिद्धयोग्यः । "

श्रेणिको भूपः पुनः स्वामिनं पप्रच्छ–" भगवन् ! स कथं रौद्रध्यानी कथं च शुक्लध्यानपरोऽभूत् " स्वामी प्राह राजन् ! त्वदग्रे

सैनिकवचनेन स्वपुत्रस्य स्वमन्त्रिवर्गादभिभवमसावश्रौषीत्, तेन सुतममतापिशाचिनीसमाविष्टमना विस्मृतसाधुव्रतो मनसा दुरात्म मन्त्रिभिरसिना योद्धुमारेभे । प्रत्यक्षैरिव तैर्दुरात्मभिरमात्यै सहात्यन्त संग्रामयन्निक्षिप्ताश्च प्रसन्नचन्द्रो राजर्षि क्रुधाऽप्रसन्नमना अभूत्, स्व निरस्त्रमपि गृहीतास्त्र सन्नद्धमजानात्, क्रोधावेशेनाचिन्तयच्च स्वमन्त्रिवर्गमेव मुकुटेन हन्मीति, ततो मुकुटजिघृक्षया यदा शिर करेणास्पृशत्, तदा लुञ्चित स्व मूर्धानं स्पृशन्नात्मानं गृहीतव्रत समस्मार्षीत् । तदा व्यचिन्तयत्—" अहो धिग्धिग् रौद्रध्यानानुबन्धिन माम्, निर्ममस्य मम तेन पुत्रेण मन्त्रिवर्गेण च किम् ? " इति चिन्तयतो राजर्षेर्मोहदुर्दिने नष्टे भूयोऽपि विवेकदिवाकरोऽतिभास्वर उदगात् । तत स पुरत स्थितानिवास्मास्तत्रैव वन्दित्वाऽऽलोच्य प्रतिक्रम्य च शुक्लध्यानमकार्षीत् तेन प्रसन्नचन्द्रराजर्षिर्दुर्ध्यानवनसंभव कर्मकक्ष शुक्लध्यानाग्निना शीघ्र भस्मसादकार्षीत् ।

तस्य राजर्षेश्चरितसुगन्धवासितो धर्मवीर श्रेणिक श्रीमहावीरस्वामिन व्यजिज्ञपत्—" भगवन् ! प्रसन्नचन्द्रराजर्षि बाल पुत्र राज्ये संस्थाप्य कथ मुनिव्रतमग्रहीत् ? " तदा वीरप्रभुरब्रवीत्—" राजन् ! पोतनाख्ये नगरे सौम्यत्वेन चन्द्र सोमचन्द्रो नाम राजाऽभूत् । तस्य शीलालङ्कारा धर्मधारिणी धारिणी नाम सधर्मचारिणी विवेकवारिवापिका बभूव । सा चैकदा गवाक्षासीनस्य निजनाथस्य केशकलाप पाणिपङ्करुहाभ्यां विवरीतु प्रारेभे । तदा सा राजशिरसि पलितमवलोक्य राजानमुवाच—" स्वामिन् ! अयं दूत आगत " राजा दिशोऽवलोक्योवाच—" अत्र स दूत किं न दृश्यते ? " तदा राज्ञ्या पलित दर्शितमूचे च—

" कृतान्तस्य दूती जरा कर्णमूले समागत्य वक्तीति लोकाः शृणुध्वम् ।
परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं जिनेशस्य पादारविन्दं भजध्वम् ॥ १ ॥ "

इत्यादि प्रियावचनं श्रुत्वा राजा यौवनवनघातकं शस्त्रमिव तं पलितं दृष्ट्वा दुरमनायत। ततो धारिणीदेवी सहास साहसं विदधाना राजानमुवाच—"एकं पलितं दृष्ट्वा यदि दुर्मनायसे तर्हि पटहध्वनिनोद्घोषय कोऽपि भवतो वृद्धत्वं लोके न प्रकाशयेत्" इति राज्ञीवच श्रुत्वा राजोवाच—"देवि! नाहं पलितदर्शनेन जिह्रेमि किन्तु मदीयपूर्वपुरुषा अदृष्टपलिता एव प्राव्रजन्, अह तु दृष्टपलितोऽपि विषय-विषधरैर्दंदश्यमानोऽस्मीति लज्जे। अहमेव स्थितेऽपि शीघ्रं प्रव्रजामि किन्तु स्तनन्धये तनये कथं राज्यभारो निवेश्यते? अथवा हे मतिमति! परिविव्रजिषो मे किं राज्यसुताभ्याम्? त्व निजात्मजं परिपालय अह श्रामण्यं ग्रहीष्यामि। धारिण्युवाच—"नाथ! त्वा विनाऽहं कथं स्थातुं समर्था? यतः सत्यो नित्यं यदा कदा च पतिमनुगच्छन्ति वनावनीरुह इव स्वकर्मभिरेव बालोऽप्ययं वर्धेता, किं तेन मम? ततः सोमचन्द्रो राजा बाले प्रसन्नचन्द्रे पुत्रे राज्यमारोप्य धारिण्या धात्र्या च दिक्प्रोषितस्तापसोऽभूत्। स किञ्चिच्छून्यमाश्रमपदमध्यवात्सीत्। नीरसपत्रादिक भुञ्जानो दुष्कर तपस्तेपे स पलाशपत्राण्यादाय हरिणाना पान्थाना च शीतच्छायां सुधाप्रपामकार्षीत्। धारिणीप्रेम-वशीभूत स स्वादुस्वादूनि जलानि फलानि च पत्न्यर्थमानैषीत्। वनेऽपि सा धारिणी पतिव्रतपरायणा कोमलतरतृणैः पत्ये तल्पं कल्पयामास। सा पक्वेङ्गुदफलानि दिने पिष्ट्वा ततस्तैल निष्काश्य निशि दीपकानकार्षीत्। वन्यार्द्रगोमयैर्वासस्थानचत्वरभूमिं पति-सुखोपवेशनार्थमनेकवार मार्जयामास। तत्र गोमयलिप्ताङ्गणे वनाश्रमे हरिणशिशून् प्रेम्णा लालयन्तौ दम्पती तपःश्रममविद्वांसौ कञ्चित् कालं व्यत्यजीगमताम्।

## वल्कलचीरिकथा।

अथ धारिणीराज्ञ्याः पूर्वसभवो गर्भोऽनुक्रमेण ववृधे। अन्यदा सूतिकागृहमध्ये कान्त्याऽतैलपूरो दीप इव सुतो धारिण्या जनया-

जज्ञे । पित्रा चाऽयमे वल्कलान्येवेति वल्कलै सोऽवेष्ट्यतातो वल्कलचीरीति तस्य नाम चक्रे । धारिणी सूतिरोगेण कालधर्ममगात् । ततो निरक्षर पुरुष इव स बालोऽदृष्टमातृकोऽजनि । तत सोमर्षिस्त बाल महिषीदुग्ध पाय पाय धात्र्या समार्पयत् । दैवात् साऽपि धात्री धारिणीमनुजिगमिषुरिव कियता कालेन पञ्चत्वमगमत्, तत सोमचन्द्रर्षि स्वयमेव महिषीक्षीरं त बालमपाययत् । गच्छस्तिष्ठन्भुञ्ज यानो वा स निजाङ्के शिशुमधारयत् ।

अथ स बाल क्रमात् पादचङ्क्रमणसमर्थोऽभूत् । वनमृगशिशुभि सह प्रतिदिनं धूलिक्रीडा चकार च । पुन स्वयमानीतैरिन्धनै नीवारैश्च रसवतीं कृत्वा स सोमर्षिर्बालमबूभुजत् । वन्यफलैस्त पोष पोष दुष्करतपसि स्वसदृश त व्यधात् ।

अथ वल्कलचीर्यपि यौवनोन्मुख सर्वथा स्वजनकसेवाकुशलोऽभूत् । एव च फलाद्याहरणैर्नित्यमङ्गसंवाहनेन च सकलमत गरिष्ठां शुश्रूषां तातस्य चक्रे । स्त्रीजनरहितवने निवसन् स आजन्मब्रह्मचार्येव मती स्त्रीनामापि न जज्ञौ ।

अथ प्रसन्नचन्द्र एकदा वनस्थस्य पितुर्धारिणीकुक्षिजात सुत स्वसोदर्यं शुश्राव । तत कीदृश स मे भ्राता? कथ मा मिलिष्यतीति मनसि परम कौतुकमजनि तस्य । तत प्रसन्नचन्द्रश्चित्रकारानेषमजिज्ञपत्—“मम तातपादानां पादकमलालङ्कृत तपोवन गच्छत, तातपादपङ्कजमरालस्य मदनुजस्य वननिवासिन शीघ्र रूप लिखित्वाऽऽनयत ।”

ततः श्रीमतामादेश प्रमाणमित्युक्त्वा चित्रकारास्त्वरितमेव वल्कलचीरिपवित्रितवनमगु । तेऽपरविश्वकर्माणोऽनुपमकौशला दर्पण प्रतिबिम्बमिव यथावस्थ त लिखित्वाऽऽनीय वल्कलचीरिणो दृशो सुधावर्तिसदृश रूप प्रसन्नचन्द्र दर्शयाञ्चक्रु । प्रसन्नचन्द्रोऽनुरूपमालोक्य मदीयजनकसदृशोऽयमनुज इति ध्यात्वाऽऽत्मा वै जायते पुत्र इति श्रुतिं सत्यापयति स्म ।

हे सोदर ! त्वं भाग्येन नयनगोचरतामाप इत्यभिधाय तं शिरसि चुचुम्ब न च निजोत्सङ्गादुदतारयत् । स च वल्कलचीरिणं वल्कलाम्बरं निरीक्ष्य गिरिरिव सनिर्झरः शीघ्रं स्यन्दमाननयनजलधारोऽभूत् अवदच्च–" वर्षीयान् मम तात उचितं व्रतमाचरतु किन्तु बालस्यास्य मदनुजस्य वननिवासोऽपि न योग्योऽस्ति । अहं राज्यसुखह्रदे मराल इव रमे, मदनुजन्मा तु भिल्ल इव वनवृत्त्याऽनुजीवति । स वनजातो जीव इव ग्रामे दुरानेयोऽस्ति । तस्मिन् राज्यभागाविधायिनि मम राज्येऽपि कष्टम् । एवं निजानुजस्य वनवासदुःखमनुशोचन् प्रसन्नचन्द्रश्चातुरीचणा वेश्या एवमादिशत्–" मुनिवेषेण यूयं वनं गत्वाऽङ्गस्पर्शैर्नैवनववचनैः खाण्डैः फलैश्च ममानुजं प्रलोभ्यात्राऽऽनयत " इति राजनिदेशमक्लेशं शिरसि निदधाना मुनिवेषं दधाना वेश्याः शीघ्रं सोमचन्द्राश्चितं तदाश्रमपदमगमन् । ततस्तत्र बिल्वादिफलान्यादाय वल्कलवसनं वसानं कुटीराभिमुखमागच्छन्तमृषिसुतं तं वेश्या ददृशुः । सोऽपि सरलमतिर्मुनिवेषधारिवेश्यानां मुनिबुद्ध्याऽभिवादनं विधायापृच्छत्–" के यूयं को वा भवतामाश्रमः ? " । ता ऊचुः–" वयं पोतनाश्रमवासिन ऋषयः स्मः, तवातिथय इहाऽऽगताः स्मः, त्वमस्माकं किमातिथ्यं करिष्यसि ? । " वल्कलचीरी प्रोवाच–" मया वनान्मधुराणि पक्वानि फलान्यानीतानि हे महर्षयो ! यूयं भुङ्ग्ध्वम् " ततो वेश्या अवोचन्–" अस्माकमाश्रमे नेदृशानि नीरसानि फलानि कश्चिद् भुङ्क्ते, अस्मदाश्रमतरूणां फलवर्णिकां पश्य " इत्युक्त्वा वृक्षमूले ता वेश्या उपाविशन्, तं च तत्रोपावीविशन् । अविफलाशयास्तं खण्डफलान्यभोजयन् । वल्कलचीर्यपि तत्क्षणादेव तदास्वादाद्बिल्वादिफलत उदविजिष्ट । पुनरेकस्थानस्थितं तं स्वाङ्गमस्पर्शयन्, तत्करं च निजपीनस्तनकुम्भोरसि न्यधुः । सोऽवोचत्–" भो महर्षयः ! श्रीमतामिदमङ्गं किं कोमलम् ? किमेते वक्षःस्थले उन्नते स्तः ? " । वेश्यास्तं कोमलपाणिपल्लवैः स्पृशन्त्य ऊचुः–" अस्मदीयवनफलभोजनेनैतादृशमङ्गं कोमलं भवति । अस्माकं महारसवनफलभक्षणेनात्यन्तवृद्ध्या वक्षस्येते

स्थले उत्पद्येते । तदिमान्याश्रमसाराणि फलानि च त्यज; अस्माकमाश्रममागत्य त्वमपि सरसफलभोजनेनास्मादृशो भव ।

अथ स्वादुफलास्वादलुब्धो मुग्धो वल्कलचीर्यपि वेश्याभिः सह जिगमिषुः सङ्केतमग्रहीत् । ततस्तापसभाण्डं संस्थाप्य वल्कलचीरी यथोपदिष्टं सङ्केतस्थानमगमत् । तदा वृक्षाधिरूढा गुप्तचरनरा आगच्छन्तं सोमचन्द्रर्षिं दृष्ट्वा वेश्यानां न्यवेदयन्, वेश्याश्च मुनिशापभीता व्याधान्मृग्य इव परस्परं वियुक्ता शीघ्रशीघ्रमनेशन् । स्वपितरि स्थानं गते स वेश्या नष्टधनो धनमिवान्वेष्टुं प्रारेभे । वने मृग इव धावन्नेकं रथिनं दृष्ट्वा तमप्यृषिं मन्यमानो 'भवन्तमभिवादये' इत्यवदत् । रथिना पृष्टो बालः–"त्वं क्व गमिष्यसि ?" कुमार उवाच–"हे महर्षे ! पोतनाभिधमाश्रमपदं गमिष्यामि" । रथिकेनोक्तम्–"अहमपि पोतनाश्रमं जिगमिषामि । ततोऽग्रेसरमिव स रथिनं वल्कचीर्यप्यन्वगमत् । पथि स मुग्धो बालो रथिकप्रियां 'हे तात'–ति मुहुर्मुहुर्भणति । इति श्रुत्वा रथिनं तत्प्रियाऽप्योचत्–"कीदृगस्य त्वोपचारधीः ?" । रथिकोऽवदत्–'स्त्रीरहितवने निवसन्नयं बालः स्त्रीपुंसयोर्भेदं न जानातीति हे प्रिये ! त्वामपि पुरुषमेव मन्यमानः त्वातेति संबोधयति, वाह्यमानानश्वान् दृष्ट्वोवाच–हे महर्षे ! इमे मृगा रथे कथं वाह्यन्ते ? मुनिगणस्य मृगवाहना नोचिता" । रथिको हसन् वल्कलचीरिणमुवाच–"हहो मृगाणामिदमेव कर्मेति वाहनायां न दोषः" ततो रथिको वल्कलचीरिणे स्वादुमोदकान् ददौ । स चाऽऽस्वादयन् मोदकं तत्सुस्वादेन सानन्दमुवाच–"ईदृशानि पोतनाश्रमवासिमहर्षिदत्तानि फलान्यहं प्रागप्यखादिषम् ।" स कुमारो मोदकभक्षणात् पोतनं गन्तुमुदकण्ठत, कषायरूक्षैर्बिल्वाऽऽमलकादिफलैरलटत् ।

अथ मार्गमध्ये रथिन एकेन बलिना चौरेण सह युद्धमभूत् । तत्र रथी गाढप्रहारेण चौरमवधीत् । ततश्चौरोऽप्युवाच–"वैरिणोऽपि घातः प्रशस्यते, भवस्त्वयाऽहं जितस्तेन तुष्टोऽस्मि, मम पुष्कलं धनमस्ति तत्त्वं गृहाण । ततो रथी तत्प्रिया कुमारश्चैते त्रयस्तत्

द्रव्य रथे स्थापयामासु.। क्रमेण पोतन प्राप्तो रथी वल्कलचीरिणमुवाच—' हे कुमार ! यस्ते पोतनाश्रमोऽभिप्सितः स एष वर्तते । ततः किञ्चिद्द्रविणं कुमाराय दत्त्वा स्मयमानो रथी जगाद—" अस्मिन्नाश्रमपदे द्रव्य विनाऽऽश्रयो न मिलत्यतः कस्मैचिद्वक्रय आश्रमार्थी त्वं द्रव्यं दद्या' । कुत्र यामि कुत्र नेति समस्तपुर उत्प्रेक्षमाणः कुमारोऽभ्राम्यत् । मुनिबुद्ध्या पुरुषाणां स्त्रीणां चाभिवादनवातूलो नागरैरुपाहस्यत मुनिपुत्र' ।

अथ पुरे भ्रमन्नेकस्या वेश्याया गृहे प्रविवेश । स कुमारो वेश्यागृहं मुन्याश्रमं मेने वेश्या च मुनिम् । पुनस्तामपि हे तात ! त्वामभिवादय इत्युवाच । हे महर्षे ! मम कुटीर समर्पय तद्वक्रयेऽदो द्रव्यं गृहाण च । सा वेश्या त्वदीय एष उटजोऽस्ति तस्माद् गृह्यतामित्युक्त्वा नापितं कुमाराङ्ग सस्कर्तु समाह्वयत् । पर स कुमारो निजाङ्गसस्कारं नैच्छत्, तथापि वेश्याज्ञया शूर्पसदृशास्तस्य पादनखान् क्लेशेन नापित उदतारयत् । सा वेश्या कुमाराङ्गाद्वल्कलचीरमपनीय तं स्नपयितु सुन्दरवस्त्र पर्यधापयत् । हे महामुने ! मम आजन्ममुनिवेष त्व मा दूरीकुर्विति वल्कलचीरापनयनसमये स बाल इवारटत् । ततो वेश्योवाच—" हे कुमार ! अस्मिन्नाश्रमे महर्षीणामतिथीनामिदमुपचार त्व स्वीकरोषि न वा ? यदि न स्वीकरोषि तदेह वस्तु कुटीरं न लप्स्यसे " । ततोऽसौ कुमारस्तस्मिन्निवासेच्छयाऽनिच्छन्नपि वेश्यानुरोधान्मन्त्रवशीकृतः सर्प इव वेश्योक्त स्वीचकार । ततो वेश्या स्वय कुमारकेशपाशं जटिलमुर्णापिण्डमिव तैलेनाभ्यज्य कङ्कतैर्विवरीतु प्रारेभे । ततः सोमेन्दुमूरभ्यज्य मृज्यमानाङ्ग कण्डूय्यमानो गौरिव सुखनिद्राणनयनोऽजनि । गणिका चाथ मन्दोष्णैर्गन्धजलैस्त स्नपयित्वा सुवस्त्राण्याभूषणानि च समार्पयत् । तत एकस्या पुत्र्याः पाणिग्रहण चाकारयत् । कुमारकरगृहीता वेश्यापुत्री साक्षाद् गार्हस्थ्यलक्ष्मीरिव बभौ । सर्वा वेश्या वधूवरावुपलक्ष्य सुस्वरगान चक्रु. । तच्छ्रुत्वा मुनिकुमारो मनसि दध्यौ—" ऋषय इमे किं पठन्ति ? "

वेश्या मार्गस्यान्यतोऽन्यमनयत् तदा किमिति विस्मितो मुनितनय कर्णौ पिदधौ ।

मुनिवेषधारिण्यो वेश्या कुमारमानेतुं यथाऽगमस्तथैवागत्य प्रसन्नचन्द्रनृप व्यजिज्ञपन्—"राजन्! बहुभि प्रकारैर्वनवासी स कुमारोऽस्माभिरिहाऽऽगन्तु प्रालोभि। तत सोऽस्माभि सम सङ्केतमग्रहीत्। दूरे कुमारपितरमायान्त दृष्ट्वा तच्छापभयात् स्त्रीस्वभावत कातरा वयमनेशाम। सोऽस्मान् गवेषयन् न प्रलोभाधीनो वनाद्वन भ्रमन् पित्राश्रम न जगामास्मत्सङ्गमपि न प्राप। एतदाकर्ण्य किमकार्षम्? पितापुत्रौ वियोजितावनुजश्च न प्राप्त पितृपार्श्वात् परिभ्रष्ट स कथ जीविष्यति? मत्स्यो जलाद्बहिष्कृतो हि कियन्त काल जीवति? इति नृप पश्चात्तापमकरोत्, एव राजाऽल्पजले मीन इवोद्वेल्लञ्छयने रतिमलभमानोऽस्थात्।

तदा राज्ञ कर्णयोरुद्वेश्याभवने प्रवर्तमानमुरजध्वनिरविशत् तच्छ्रुत्वा सम्प्रति मद्दुःखेन समग्र नगर दुःखितमस्ति, कोऽयमेतादृग् लोकोत्तरसुखी यस्य गृहे मुरजध्वनि प्रवर्तते? अथवा सर्वो हि स्वार्थपरायणो भवति, एष मृदङ्गध्वनि कस्यापि मुदे भवति, मम कृते मुद्गरप्रहारसोदरो न हर्षाय जायते।

इति राज्ञ शोकवचन अनुश्रुत्य वेश्या विज्ञाय शीघ्रमेव कृताञ्जलि प्रसन्नचन्द्र भूप विज्ञपयामास—"राजन्! पुरा कश्चिद्दैवज्ञ एवमचकथत् 'तव गृह ऋषिवेषो युवाऽऽगमिष्यति तस्मै स्वकन्या देया' इति। स एव गौरिव व्यवहारानभिज्ञ ऋषिवेषो युवा मद्गृहे समागात्। तस्मै स्वकन्या वधूत्वेन समर्पिता मया। तद्विवाहमहे देव! मद्गृहे गीतवाद्यादि प्रवर्तते। त्वा दुःखित न जानामि। यदि ममापराधस्तर्हि त क्षमस्व।"

अथ राजा कुमार मार्ग दृष्टवतो नरानादिशत्,—"यूय वेश्यालय गत्वा त पश्यत।" ततस्ते गत्वा त दृष्ट्वोपालक्षयंस्तत आगम्य

राजान ते न्यवेदयन् । राजाऽपि दृष्टसुस्वप्न इवात्यन्तममोदिष्ट। ततश्च स वध्वा सह वल्कलचीरिण हस्तिनीमधिरोप्य स्वभवनमानाययत् । राज्ञा स कुमारः क्रमेण सकलव्यवहारकुशलो व्यधायि । नियुक्तैः पशवोऽपि हि शिक्ष्यन्ते किं पुनर्मनुजः ? । राजा तस्मै राज्यार्द्धं दत्त्वा स्व कृतार्थं मेने । स्वर्गाङ्गनासदृशी राजकन्यास्तेनोदवाहयत् । स च वल्कलचीरी ताभिर्वधूभिः करेणुभि कुञ्जर इव विपुलं रेमे ।

एकदाऽस्य वल्कलचीरिणो मार्गसुहृद्रथिकश्चौरदत्तं स्वर्णादि विक्रीणानः पुरेऽभ्राम्यत् । ततो यस्य यस्य धनं चौरापहृतमासीत् स स स्व स्व धनमुपलक्ष्योत्थापितबाहुरारक्षकानकथयत् । आरक्षकाश्च चौरं मत्वा राजद्वारमनयन् । राजाऽनुजो वल्कलचीरी जीवानुकम्पया दृशा तमदर्शत् । मार्गोपकारिण तमुपलक्ष्यामोचयच्च । यत· " नहि कृतमुपकार साधवो विस्मरन्ति । "

इतश्च सोमचन्द्रः स्व सुतमपश्यन् वने वृक्षाद्वृक्षमश्रुभिः सिञ्चन्निवाभ्रमत् । प्रसन्नचन्द्रप्रेपितजनैर्वल्कलचीरिवार्ताकथनानन्तरं स प्रफुल्लनयनोऽजनि । परञ्च तस्य पुत्रवियोगेनातिरोदनवशाद्दिनेऽपि रात्राविवान्धत्वमभूत् । स वृद्धतापसोऽन्यैस्तपस्विभिस्तपोऽन्ते फलादिभिरपार्यत् ।

अथ द्वादशसु वर्षेषु पूर्णेषु रजन्या प्रबुद्धो वल्कलचीर्येकदैवमचिन्तयत्–" मम मन्दभाग्यस्योत्पन्नमात्रस्य माता व्यपद्यत । मत्तातो वने वसन्नपि मत्परिचर्यामकरोत् । रात्रिंदिव कटिस्थोऽह तप कष्टादप्यधिकं कष्टं स्वपितुरजीजनम् । यौवने यावदहं तत्प्रत्युपकार-समर्थोऽभूव तावद्दैवादजितेन्द्रिय-पापोऽत्रागमम् " इत्येव निशीथे चिन्तयन् स गत्वा राजानमवोचत्–" अग्रज ! अहं तातपादानत्यन्तं दिदृक्षे " राजोवाच " हे अनुज ! आवयो· पिता समान एवास्ति, तवेव ममापि दिदृक्षाऽस्ति तातचरणानाम् " ततस्तौ सपरिवारौ तात-पादालङ्कृतमाश्रमपदं जग्मतु., द्वावपि यानादुदतरताम् । वल्कलचीरीत्यवदत्–" अग्रज ! एतत्तपोवनं दृष्ट्वा राजलक्ष्मीस्तृणायते मम ।

यत्र सरांसि हंस इवारंसि पानीयानि सरोवराणि। येषां तरूणां फलानि कपिरिवास्वाद त एते तरवः। यैर्मृगशिशुभिरक्रीड त इमे मृगार्भकाः। यासां महिषीणां क्षीरमपां ता मातृकल्पा इमाः। हे स्वामिन्! एतद्वनसुखं किं वर्णयामि? एकं तापसेवनसुखं राज्यकोटिसुखं तिरस्करोति। ततस्तौ भ्रातरौ तातपादाश्रमं प्रविश्य नयनकमलविकाशकरं तातममे निरीक्षाञ्चक्राते। तातं प्रति राजोवाच—"तव पुत्रः प्रसन्नचन्द्रस्त्वामभिवादयते" तमभिवादयन्तं पाणिना सोऽस्पृशत्। तेन पुलकितगात्रो राजोत्कोरककदम्बवदभूत्, राजाऽनुजोऽपि सोमचन्द्रर्षिं निजतातं प्रणमन्निदमुवाच—"एष वल्कलचीरी भवच्चरणकमलभिकिन्दतां प्राप्तः" तत सोमचन्द्रर्षिः शिरआघ्रायामोदत, गिरिमिव सरित्स्तं सर्वाङ्गमालिलिङ्ग। सोमचन्द्रर्षेस्तदा नयनयुगलात् कवोष्णो बाष्पो निरगलत्। अश्रुपतनमेव तस्या पटलप्रध्वसपरमभैषज्यमभूत्। पुनरावृत्तगार्हस्थ्यस्नेहघनो मुनिस्तत्कालमालोकक्षमाभ्यां नेत्राभ्यां स्वपुत्रौ तौ निरीक्ष्यापृच्छत्—"हे वत्सौ! सुखं कालोऽतिगमितः" तावुदतरतां—'तात! कल्याणतरुदोहदात् त्वत्प्रसादात्।'

ततो वल्कलचीरी तापसभाण्डमदृश्यमानं कीदृशमभूदिति कुटीरमध्यं शीघ्रं प्रविवेश। तद्भाण्डवृन्दं निजवस्त्राञ्चलेन पात्रमलमनुवधन् प्रतिलेखितुं प्रारभत। तत्प्रतिलेखनवेलाया तस्यैव चिन्ताऽभूत्—'मुनीनां पात्राणि किमहं प्राक् पात्रकेसरिकया प्रत्यलिखम्?' इति चिन्तयतस्तस्य जातिस्मरणमजनि। सो विहितवत् स्वदेवमनुष्यभवानस्मरत्।

अथ स प्राग्भवपालितं श्रमणत्वं स्मरन् मोक्षलक्ष्मीमिव परमं वैराग्यं प्रापत्। धर्मध्यानं कृत्वा शुक्लध्याने स्थितो वल्कलचीरी परमोज्ज्वलं केवलज्ञानं लेभे। तत्क्षणलब्धकेवलज्ञानः सोऽमृताभां धर्मदेशनां तातमग्रजं च प्रति चकार। तत्र प्राप्तबोधौ सोमचन्द्र-प्रसन्नचन्द्रौ देवसमर्पितयतिलिङ्गं वल्कलचीरिणं प्रणमताम्।

हे श्रेणिक ! अहमेकदा विहरन् पोतनसमीपे मनोरमउद्याने समवासरम् ' तदा प्रत्येकबुद्धो वल्कलचीर्यपि स्वपितरं मह्यं समर्प्याऽन्यत्र व्यहरत् । राजा प्रसन्नचन्द्रोऽपि पोतनपुरं प्रायासीत् । तत्र गत्वा स वल्कलचीरिवचनैः सुदृढवैराग्योऽवसत् । तदा प्रसन्नचन्द्रो बालमपि स्व पुत्र स्वराज्ये सस्थाप्य विरक्तमना मम पार्श्वे प्राव्राजीत् ।

श्रीमहावीरस्वामिन्येवमुक्त्वा विरते श्रेणिक आकाशे देवसपातमपश्यत् । ततो जगदीश्वरं प्रणम्याप्राच्छत्–" स्वामिन् ! किमेष प्रकाशिताकाशो देवसम्पातो दृश्यते ? । तच्छ्रुत्वा स्वाम्युवाच–" राजन् ! प्रसन्नचन्द्रर्षेरिह केवलज्ञानमुदपद्यत । तन्महिमान विधातुमिमे देवाः सपतन्ति । "

## जम्बूस्वामिपूर्वभवकथा ।

श्रेणिको भगवन्तं श्रीवीरं पुनर्व्यजिज्ञपत्–" नाथ ! केवलज्ञान कस्मिन् व्युच्छेद गमिष्यति ? " भगवानुवाच–" राजन् ! पश्यैष ब्रह्मेन्द्रस्य सामानिको विद्युन्माली सुरश्चतुर्देवीयुतोऽस्माद्दिनात् सप्तमदिवसे तव पुर ऋषभदत्तश्रेष्ठिनो जम्बूनामा पुत्रोऽन्तिमकेवली भविष्यति " पुना राजाऽपृच्छत् " स्वामिन् ! एष देव आसन्नच्युतिश्चेत्तर्हि कथ नास्य तेज. क्षीणमस्ति ? । " भगवानुवाच–" राजन् ! एकावताराणा देवानामन्तकालेऽपि तेजःक्षयादिच्यवनचिह्नानि न प्रादुर्भवन्ति " । तदाऽनाढतनामा जम्बूद्वीपपतिरेको देवो हर्षेणोच्चैरेवमुवाच–" अहो ! मे कुल धन्यमस्ति " तदा श्रेणिक. कृताञ्जलिर्भगवन्तमप्राक्षीत्–" भगवन् ! देवोऽयं कस्माद्धेतो स्वकुलं प्रशंसति ? । "

इति श्रुत्वा सर्वज्ञो भगवानुवाच–" राजन् ! अस्मिन्नेव पुरे गुप्तमतिनामा श्रेष्ठी जगत्प्रसिद्धोऽभूत् । तस्य क्रमाद् द्वौ पुत्रावजनिषाताम् । ज्येष्ठ ऋषभदत्ताख्यः कनिष्ठो जिनदासनामा च । तत्र ज्यायान् पुत्रोऽतिसदाचारः, कनीयान् द्यूतादिव्यसनीति कृतयुग–कलि-

व्रणो मस्तके इव शरीरे । लघुः पुत्रो दुराचार इति सकलजनसमक्षे बुद्धिमता श्रेष्ठिना परित्यक्तः । ज्येष्ठश्चाह भ्रातृरहितोऽस्मीति वदन् शुन इव कनिष्ठस्य गृहे प्रवेशमपि नाददात् । ”

एकदा जिनदासोऽन्येन द्यूतकारिणा द्यूतक्रीडा कुर्वन् संजातद्यूतकलहे तेन सद्योऽस्त्रेण निहत । घृतविपक्षस्याघातपीडन फलमनुभवन् जिनदासो रङ्क इव भूतलेऽलुठत् । स्वजना ऋषभदत्तमेव न्यवेदयन्–“ भो परमार्हत ! प्राणिमात्रसाधारणदयया स्वानुज जीवय ” यत —

“ पात्र कीर्तेर्विशुद्धाया स बन्धुः स च नायकः । यो बन्धुं सेवक चाभ्युद्धरते व्यसनाब्धितात् ॥ १ ॥ ”

एव स्वजनप्रेरित ऋषभदत्तोऽनुजमुपागात्, तमाश्वासयच्च–“ हे वत्स ! समाश्वसिहि त्वामौषधादिभी रक्षिष्यामि ” ततो जिनदास उवाच–“ जीविताशारहितस्य मे पारलौकिक कार्यं कुर्या मम दुर्नयांश्च क्षमस्व । हे आर्याधुना परलोकपान्थस्य मे धर्मोपदेशपाथेयमन शनपूर्वक देहि । ” तत ऋषभदत्तोऽनुजमुपादिशत्–“ वत्स ! निर्ममो भव, शुद्धमना पञ्चपरमेष्ठिनमस्कार जप ” एवमाद्यनुशिष्य कलुषात्मनशनयुतां भगवदाराधनामचीकरत् । तत्प्रभावाज्जिनदासोऽपि पण्डितमरणेन पञ्चत्व गत्वा जम्बूद्वीपपति परमर्द्धिको देवोऽजनि । स चाय देवो “ राजगृहनगर ऋषभदत्तस्य पुत्रो जम्बूनामा चरम केवली भावी ” इति स्वपूर्वकुले भ्रातृगृहे केवलिजन्म श्रुत्वा प्रमोदान्निजकुल पावन मन्यमान प्रशसति ।

### भवदत्त–भवदेवकथा ।

राजा पुन प्रभुमप्राक्षीत्–“ भगवन् ! एष विद्युन्माली देवो ग्रहेषु सूर्य इव कथ तेजस्वी प्रतिभाति ? ” प्रभुरुदचरत्–राजन् !

अस्य जम्बूद्वीपस्य मगधदेशे सुग्रामग्रामे आर्यवान् राष्ट्रकूतोऽभूत् तस्य रेवतीनाम्नी पत्नी, तयोर्भवदत्त-भवदेवनामानौ पुत्रावभूताम् ! तत्र भवदत्तो यौवनेऽपि श्रीसुस्थिताचार्यपार्श्वे भवाम्भोनिधेरुत्तारणतरीं दीक्षामग्रहीत् । सोऽसिधारोग्रं व्रत परिपालयन् शास्त्रपारगो गुरोर्द्वितीयतनुरिवाऽऽचार्येण सह विजहार ।

एकदा तस्मिन् गच्छे कश्चिदेक. साधुराचार्यं प्रत्यजिज्ञपत्-" गुरो ! यत्र मे बन्धुजनोऽस्ति तत्र जिगमिषुं मां गन्तुमादिश, यतस्तत्र ममानुजोऽतिस्नेही मयि विद्यते । स पूर्वतो भद्रप्रकृतिर्मां दृष्ट्वा प्रव्रजिष्यति । ततः शास्त्रज्ञसाधुयुतं तं तत्र गन्तुमादिशत् तदीयाचार्यवर्य., यतः-" परोद्धारपरायणे शिष्ये गुरुः प्रसीदति । "

अथ गुरुनिर्दिष्टः स स्वीयपितृसदनमुपेत्य भ्रातुः कामतरुवर्धकं विवाह तत्रारब्धमदर्शत् । तदा विवाहकौतुकव्यग्रो मुनिलघुभ्राता विस्मृतेतरकार्यो हर्षोत्कर्षव्यग्रोऽभूत् । विवाहसमये प्राप्तं स्वानुजमुनिमजानान इव स्वागतमपि न चकार व्रतग्रहणकथा तु दूरे बभूव । ततो विषण्णमना· स मुनिस्तत· परावृत्य निजाचार्यसकाशमागमत् । गुरुचरणान् प्रति निजानुजस्य सकला कथामकथयत् । ततस्तच्छ्रुत्वा भवदत्तो मुनिरेवमवोचत्-अहो ! अनुजस्य नैष्ठुर्यमेतत् यद् गृहेऽभ्यागत ज्यायांसमृषिमवाज्ञासीत्, किं गुरुभक्तितोऽपि विवाहकौतुक श्रेयो यत् तत्परित्यज्य सानन्दः स ज्येष्ठ नानुगतवान् ।

तदा साधुः कश्चिदेवमुवाच-" हे भवदत्त ! यदि त्वं चतुरोऽसि तदा निजमनुजं प्रव्रज्या आहय । " एतच्छ्रुत्वा भवदत्तमुनिरुवाच-" हंहो यदि गुरुचरणा मगधदेशे विहरिष्यन्ति तदाऽदः कौतुक प्रदर्शयिष्यामि "

अन्यदाऽऽचार्या विहरन्तो मगधानेव जग्मुः, यतः पवनवत् साधवो नैकत्र तिष्ठन्ति । ततो भवदत्तमुनिर्गुरुचरणान् वन्दित्वैवं

व्यजिज्ञपत्—"गुरुचरणा ! इव संनिहितान् स्वजनान् दिदृक्षोऽतो भवन्तस्तत्र गन्तुमाज्ञापयन्तु" ततो गुरुरेकाकिनमपि भवदत्तमुनिं तत्र गन्तुमाज्ञापयाञ्चकार । यतो वशिन एकाकिनोऽपि विहार कल्पते । ततो गुरुनिर्दिष्ट स स्वसंसारिबन्धुगृहमनुज दीक्षा ग्राहयितुमनुकम्पाकलितहृदयो जगाम । तदा भवदेवो नागदत्तस्य वासुकीगर्भसंभूता पुत्रीं पर्यणैषीत् । कृतविवाहमहा सर्वे बन्धुजना भवदत्तमुन्यागमन महोपरिमह मन्यमानास्त हर्षेणाभिजग्मु । ते बन्धवो भवदत्तमुनिचरणौ प्रासुकोदकेन प्रक्षाल्य तीर्थजलादप्यधिक तत्पादोदक मत्वा ववन्दिरे ।

✓यतः—गङ्गा पाप शशी ताप दैन्य कल्पतरुर्हरत् । पाप ताप च दैन्य च हरेत् साधुसमागम ॥ १ ॥

साधूना दर्शन पुण्य तीर्थभूता हि साधव । कालेन फलते तीर्थं सद्य साधुसमागम ॥ २ ॥

जाड्य धियो हरति सिञ्चति वाचि सत्य, मानोन्नतिं दिशति पापमपाकरोति ।

कीर्तिं च दिक्षु विमला वितनोति लक्ष्मीं, सत्सङ्गति कथय किं न करोति पुंसाम् ? ॥ ३ ॥

भवसागरनिमज्जनभयादिवावलम्बनमिच्छन्त सर्वे बन्धवस्तदीयचरणकमलयोर्लगित्वा त प्रणेमु । भवदत्तमुनिरप्यवोचद् बन्धून्—'भो यूय विवाहोत्सवव्याकुला स्थ, अतोऽन्यत्र वय गच्छाम', युष्माक धर्मलाभोऽस्तु, सर्वे बन्धव एषणीयकल्पनीयभक्तपानादिभिस्त मुनिं प्रत्यलम्भयन् । तदानीं भवदेवोऽपि स्वकुलाचारं प्रपालयन् सखीभि सेव्यमानां नवोढा मण्डयन् चन्द्रमण्डलादाकृष्टेन चन्द्रातपरसेनेव श्रीखण्डचन्दनरसेनाङ्गराग चकार । नवोढाशिरसि प्रस्तचन्द्रराहुश्रीचौरक कुसुममाल्यगर्भित धम्मिल्ल बबन्ध । तत्कपोलफलकयो कस्तूरीरसेन कामदेवस्य जयप्रशस्तिमिव पत्रवल्लरीमलिखत् । यावत् स तत्कुचमण्डलयोर्मण्डन प्रारेभे तावता भवदत्तमहामुनेरागमन

वार्तां शुश्राव । भ्रातृदर्शनोत्सुक स जयवान् द्यूतकार इवार्द्धभूषितामपि प्रिया त्यक्त्वा शीघ्रमुत्तस्थौ । तदा प्रियासखीभिरर्द्धमण्डनपरित्यागनिषेधानौचित्यादिकथ्यमानमपि बधिर इव नाश्रौषीत्, साग्रह वारयन्तीना तत्सखीना भवदेव इदमुत्तरमदात्—" हे बालिकाः ! अह गुरु वन्दित्वा पुनरागमिष्यामि " । ततो भवदेव. स्वस्थानात् कपिरिव प्लवमानो भवदत्तमुनिं तत्रोपस्थित समभ्येत्य ववन्दे, वन्दित्वोत्थितमात्रस्यानुजस्यानगारशिरोमणिः मुनि· प्रव्रज्यादानार्थं सत्यङ्कारमिव घृतभाजनमर्पयाञ्चक्रे, ततो भ्रातरि दत्तनेत्रोऽगारान्निर्जगाम । भवदेवोऽपि तत्सर्पिर्भाजन स्वपाणौ वहन् मुनिपदारविन्दमकरन्दमिलिन्दो भवदत्तमुनिमन्वगात्, अपरेऽपि जना प्रमोदान्वितहृदया नार्यश्च भवदत्तमुनिमन्वीयु· । स च—मुनिः कमपि स्वमनुगच्छन्त न व्यसृजत् । अदो हि मुनीनामुचितम् । मुनिनाऽविसृष्टा विशिष्टानुरागास्ते जना न परावर्तिरे । कियद्दूर गत्वा विषण्णहृदयास्ते मुनिं वन्दित्वा स्वयमेव परावृतन् । ततो भद्रहृन्यो भवदेवो व्यचिन्तयत्—" एते विसृष्टा अपि परावर्तन्ते यत एते सोदरा न सन्ति, अहं त्वस्य मुने. सोदरोऽस्मि, आवा मिथ स्नेहिनौ स्व', तस्मादमुनाऽविसृष्टस्य मम परावर्तन नोचितम् । भक्तपानादिभारभरेणाऽऽक्रान्तोऽय मदग्रजः, अत एव प्रसीदन् घृतभाजनं वोढु ममार्पयत् । चिरकालादभ्यागत श्रान्त ज्येष्ठभ्रातर मुनिममु स्थानेऽमुक्त्वा निवर्तितु न शक्नोमि " ।

ततो भवदत्तमुनि मदनुजोऽय मार्गे न श्राम्यत्विति गार्हस्थ्यवार्तां प्रारेभे । यथा—" हे भ्रात ! एते ते ग्रामपर्यन्तवृक्षा मार्गमण्डपाः सन्ति, येषु पूर्वमावा कपिवत् सानन्दमक्रीडाव । तान्येतानि सरोवराणि येषु बाल्ये वयस्यावा कमलिनीनालैर्निजनिजकण्ठयो. परस्परं हारमकार्ष्व । ता एता ग्रामपर्यन्तभूमय· सन्ति, यासु वालुकाभिश्चैत्यक्रीडा वर्पर्तावावामकार्ष्व । " एवमध्वनि स्वानुज वार्तयन् भवदत्तो निजाचार्यचरणकमलपूत ग्राममगमत् ।

"तत क्षुल्लका भवदत्तमुनिं निजानुजसहितं वसतिद्वारमागतं दृष्ट्वा परस्परं विहितवक्रोष्ठिका अवोचन्–" अनेन मुनिना दि‌‌‍व्यवेष धरोऽनुज प्रव्रज्यार्थमानीतस्तेन मन्यामहेऽय स्ववच सत्यापयिष्यति ।"

तदा सूरिरुवाच–" भवदत्त ! त्वया सह कोऽय युवाऽऽगतोऽस्ति ?" भवदत्त उवाच–"असौ ममानुजो दीक्षां जिघृक्षुरिहागमत्" । तत सूरिर्भवदेवमप्राक्षीत्–वत्स ! त्व किं व्रतमादातुमिच्छसि ? । ततो भवदेवो भदप्रजो मुनिर्मिथ्यावादी माभूदिति भगवन्तेवमिति दीक्षास्वीकारवचोऽवोचत् तदैव सूरिर्भवदेवमदीक्षयत् । साधुभ्यां सहान्यत्र विहर्तुमयुञ्जत ।

ततो भवदेवपरिजनास्तदनागमनचिन्तया क्षुब्धोऽभ्युपगम्य भवदत्तमुनिमूचु –" भगवन् ! अर्धमण्डितां प्रियां मुक्त्वा भवतोऽनुगतो भवदेवोऽद्यापि गृह न प्राप्त । तस्मिन्ननागते वय जीवन्तोऽपि मृता एव स्म । तद्वधूश्चक्रवाकीव तद्विरहविधुरा, सिरान्भुवत् तस्या नयनाम्बु न विश्राम्यति । भवदेवोऽस्माननापृच्छ्य स्वप्नेऽप्येकाकी न कचिद् व्रजन्नासीत् । किं स कचिद् गतः ? भवदेवमपश्यतो नष्टधनानिव भ्रहिलानस्मान् हे कृपे ! स्वानुजवार्ताकथनेनानुगृहाण ।" ततो धर्मोद्विकेच्छुर्भवदत्तोऽनुजस्य कृते मिथ्याऽप्यवोचत्– "आगतमात्रोऽपि स कचिज्जगाम वय न जानीमहे । किं केन पथा क गत स इति जल्पन्तो दीनवदना दस्युमुषिता इव तत मत्या गृतन् । भवदेवो नवोढा हृदि ध्यायन् केवल भ्रातृभक्त्यैव सजल्पा प्रव्रज्यां पर्यपालयत् । ततो भवदत्तर्षिर्बहुना कालेन व्यतीतेनानशन कृत्वा विपन्न सौधर्मे देवोऽभूत् । ततो भवदेवश्चैव दध्यौ–मम नागिला प्रेयसी तस्या अहमपि प्रेयान् अहो द्वयोर्विरहोऽभूत् । एतावद्दिन पर्यन्त भ्रात्रनुरोधेन व्रतमहमपालयम् । तस्मिन् दिव गते किं मम आयासहेतुना व्रतेन ? यथा नागिलाविरहेणाह दु खी न तथा दुष्करेणापि व्रतकष्टेन ? कथमहो सा भविष्यति ? आलानबद्धा हस्तिनीव, हिमयुता कमलिनीव, मरुगता मरालीव, ग्रीष्मतापयुता लतेव, यूथ-

भ्रष्टा हरिणीव, पाशबद्धा सारिकेव दैन्ययुता सा लोकानुकम्प्यैव भवेदिति मन्ये । यद्यहं जीवन्तीं तां प्राप्स्यामि तदाऽद्यापि मुनिव्रतं विहाय गृहस्थतातृप्तो, दीर्घनयनया तया सह रंस्ये । एवं चिन्तातन्तुभिरूर्णनाभ इव स्वं बध्नन् स्थविरर्षीननापृच्छ्यैव भवदेवो विनिर्जगाम । स भवदेवः शीघ्रमेव सुग्रामं ग्रामं जगाम । तत्र ग्रामाद्बहिः सवृतद्वारबाह्यगृहसमीपे तस्थौ । तावता तत्रैकया ब्राह्मण्या सह नागिला गन्धमालाधराऽऽगता, सा 'असौ कोऽपि मुनिरभ्यगादि'ति तमवन्दत । ततो भवदेवस्तां पप्रच्छ—"हे भद्रे ! अस्मिन् पुरे आर्यवान् राष्ट्रकूटस्तस्य रेवतीनाम्नी पत्नी च सम्प्रति जीवति न वा ?" सा प्रत्युवाच—"तौ मृतौ तयोर्मरणस्य भूयान् कालो व्यतीयाय ।" पुनरपि भवदेवस्तामप्राक्षीत्—भद्रे ! आर्यवत्पुत्रेण भवदेवेन नवोढा प्रिया या त्यक्ता सा विद्यते न वा ?" सा व्यचिन्तयत्—"अयं भवदेव एवास्ति । प्रायोऽग्रजाद् व्रत गृहीतवान् अथवा निष्पापमिहाऽऽगतमेतं वार्तयामि । एवं विचिन्त्योवाच—"भगवन् ! त्वमेवार्यरेवतीपुत्रो भवदेवोऽसि । हे तपोधन ! किमर्थमागतोऽसि ? ।" भवदेवोऽवदत्—"साधु त्वयाऽहमुपलक्षितोऽस्मि । स एवाहं नागिलाप्राणेश्वरो भवदेवोऽस्मि । तदाऽहं ज्येष्ठभ्रात्रनुरोधेनानिच्छन्नपि दुष्करं व्रतमग्रहीषम् । अग्रजे मृते साम्प्रतमहं निरङ्कुशो नागिला कथमभूदिति तद्दिदृक्षयाऽत्रागमम् । ततो नागिला व्यचिन्तयत्—"चिरादृष्टा परावृत्तवयोगुणा मामसौ न प्रत्यभिजानाति ।" तस्मादेनमात्मानं परिचाययामि । इति विमृश्य नागिलोवाच—"या नवोढा त्वयाऽत्याजि सा नागिलाऽहमेवास्मि । स्वर्गापवर्गफलदायकं रत्नत्रयं विहाय वराटिकामात्रसदृशीं मा मा गृहाण । अत्यन्तघोरनरकपातसाक्षिणां कामास्त्राणां विषयाणां लक्ष्यो मा भूः । हितैषिणा भ्रात्रा छलेनापि त्वं व्रतं ग्राहितोऽसि । मयि पापतनौ रतस्तमप्यनाप्त मा मन्यस्व । तत्समीपे मयि रागकृतं पापं समालोचय ।" एवं नागिला यावद् भवदेवं भृशमन्वशासत् तावत् तया ब्राह्मण्या भुक्तपायसो बालकस्तत्राऽऽगमत्, अवोचच्च—"मातः ! यन्मयाऽमृततुल्यं पायसं भुक्तं तदहं वमि-

ष्यामि, अधो भाजनं धारय। यतोऽहमन्यत्र निमन्त्रितस्तत्र दक्षिणा लप्स्ये। अथान्तपायसोऽहं भोक्तुं न शक्ष्यामि दक्षिणामादायाऽऽगतोऽहं पुनः पायसं भोक्ष्ये। स्वयं वान्तं स्वयं भोक्ष्ये। तत्र स्वोच्छिष्टभोजने का लज्जा ?। ब्राह्मण्युवाच–"वान्ताशी त्वं निन्दितो भविष्यसि। तस्माद् हे पुत्र! अनेन निन्द्यकर्मणाऽलम्।" तदा भवदेवोऽप्यवदत्–"हे बाल! वान्ताशी त्वं कुक्कुरादपि निकृष्टो भविष्यसि" तदा नागिलोवाच–"ऋषे! यद्येवं जानीषे, वदसि च तदा मां त्यक्त्वा पुनः किमुपभुभुक्षसे? मांसशोणितास्थिविष्ठामूत्राद्यशुचिपूर्णाऽहं वान्तादपि परमाधमा जुगुप्सनीयाऽस्मि। यद् किमीदृशीं मां कामयमानो न बिभेषि?। पर्वते ज्वलन्तमग्निं पश्यसि चरणयोरधः पुनर्न, यत् परं शिक्षयसि स्वयं त्वं न, येऽन्यशिक्षादक्षास्तेषां पुंसां का गणना? ये पुनः स्वं शिक्षयितुं समर्थास्तेषां नृणां पुण्या गणना"। एतन्निशम्य भवदेवोऽवदत्–"हे अनघे! त्वयाऽहं साधु शिक्षितः। जन्मान्ध इवोत्पथे गच्छन्नहं पन्थानमानीतोऽस्मि। तदद्य स्वजनान् दृष्ट्वा गुरुसकाशे गमिष्यामि। तत्र व्रतातीचारमालोच्य दुस्तपं तपस्तप्स्ये च। नागिलोवाच स्वजनैस्ते किम्? स्वार्थपरायणो भव। ते हि गुरुदर्शने मूर्ता विघ्नाः सन्ति। तस्माद् गुरुसकाशं गच्छ। दान्तात्मा व्रतं कुरु। अहमपि व्रतिनी-पार्श्वे प्रव्रजिष्यामि।

अथ भवदेवः समाहितो जिनबिम्बानि वन्दित्वा गुरुपार्श्वे गत्वाऽऽलोचनादिकृत्यमकरोत्। भवदेवः श्रामण्यं निरतीचारं प्रपालयन् कालधर्मं कृत्वाऽऽदिकल्पे शक्रसामानिकः सुरोऽभूत्।

## सागरदत्तकथा।

इतश्च भवदत्तस्य जीवस्स्वर्गाच्च्युत्वा विदेहधरणिशिरोमणौ पुष्कलावत्या विजये पुण्डरीकिण्यां नगर्यां वज्रदत्तस्य चक्रवर्तिनो यशोधरा

नाम्न्या राज्ञ्याः कुक्षाववातरत्। तस्मिन् गर्भस्थे यशोधरादेव्याः समुद्रस्नाने दोहदोऽभूत्। ततो वज्रदत्तनृपः समुद्रसदृश्या सीतानद्या यशोधरादेवीं क्रीडयित्वा तदीयदोहदमपूपुरत्। अथ पूर्णदोहदा सा यशोधरादेवी लतेवाधिकाधिक लावण्यं प्राप। क्रमेण पूर्णे समये यशोधरा गङ्गा कनककमलमिवोत्तमं पुत्रमजीजनत्। वज्रदत्तनृपः शुभे दिने यशोधरायाः सागरस्नानदोहदानुसारि सागरदत्त इति नामाकार्षीत्। स राजपुत्रो धात्रीभिर्लाल्यमानः पयःपानादिभिः कर्मभिः पाल्यमानश्च तरुरिव क्रमेण वृद्धिं प्राप। जातवाक्प्रचारः स कुमारः स्वर्णदण्डमुत्थाप्य शुकशारिकाः सोत्कण्ठं पाठयामास। प्रौढतां प्राप्तः पुष्टः स रङ्गभूमौ नृत्यन्मणिकुण्डलः सुहृद्भिः सह रत्नकन्दुकैरक्रीडत्। राज्ञा समये गुरुसकाशे नियुक्तो गुरोः सकलाः कलाः पथिकः कूपादप इव परिपपौ। विश्वस्यापि नयनकैरवाणि प्रमोदयन् विधुरिव सम्पूर्णकलो यौवनं स प्रापत्। पितृभ्यां स्वयंवरागताः कन्याः स परिणिन्ये। यतो नद्यो रत्नाकरमिव कन्याः पात्रमागच्छन्ति। ताभिः कन्याभिः सह वृषभोऽनड्वाहीभिरिव, हस्ती हस्तिनीभिरिव, चन्द्रस्ताराभिरिव चिक्रीड।

अन्यदा कामदेवकल्पः स प्रासादे स्त्रीभिः सह रममाणो गगने मेरुसदृशं मेघमण्डलमदर्शत्। अचिचिन्तच्च—"अहो आगमे मेरुर्यादृक् श्रूयते तादृग् मेघमयोऽयं रमणीयो दृश्यते एव मेरुवन्मेघमण्डलं प्रेक्षमाणस्य तस्य तन्मध्ये विलग्नेव दृष्टिरधोमुखी नाजनि। कुमार उत्पश्यो यावन्मेघमण्डलं ददर्श तावद् बुद्बुदवत् तन्मेघमण्डलं विलीय क्वचिज्जगाम। ततः कुमार एवमचिन्तयद्—यथा मेघोऽयं क्षणिकस्तथा देहोऽपि प्राणिनामेषः, तर्हि सम्पत्तीनां का कथा? यत् प्रातर्दृश्यते तन्मध्याह्ने न, यच्च मध्याह्ने तन्न रात्रौ, अतः सर्वेषां पदार्थानामस्मिन् संसारेऽनित्यत्वमवधार्यते। तस्माद् विवेकजलसिक्तमनुष्यभववृक्षस्य सकामनिर्जरासारं व्रतं फलं पश्यामि। इति विचारानन्तरं सागरदत्तकुमारः परमं वैराग्यं धारयन् व्रतग्रहणाय कृताञ्जलिः पितरौ पप्रच्छ। तदा पितराववोचताम्—"वत्स! यथा

वाद्यमानायां वीणायां शास्त्रपाठो व्यर्थस्तथा यौवनेऽपि तव व्रताऽऽग्रहः । अधुना त्वं युवराजः पुना राजा भविष्यसि, तस्माद् राज्यं चिरं पालयित्वा समये प्रव्रजेः " । ततः सागरदत्त उवाच–' हे पितरौ ! मया राजलक्ष्म्यश्चेतसो दूरीकृताः, अतो मां परिव्रज्यां ग्रहीतुं किं नाऽऽदिशथ । एवमत्याग्रहकुठारेण स चतुरः सागरोऽथ पित्रोः स्नेहपाशमच्छिदत् । ततस्तौ तं व्रतग्रहणायाज्ञापयाञ्चक्रतुः । अथानेकराजपुत्रपरिवारपरिकरितः सागरः सागराचार्यपार्श्वेऽमृतोपमं व्रतमग्रहीत् । ततः स सागरदत्तो मुनिर्नानाभिग्रहधरो गुरुशुश्रूषानिरतः क्रमाच्छास्त्रसमुद्रपारङ्गतोऽभूत् । ततस्तपस्यतस्तस्य तपसः किमपि दूरे नास्तीति प्रतीतिजनकमवधिज्ञानमुदपद्यत ।

## शिवकुमारकथा ।

इतश्च भवदेवजीवोऽपि प्रथमस्वर्गभोगकाले पूर्णे स्वर्गाच्च्युतस्तत्रैव विजये पुरीशिरोमणौ वीतशोकायां पद्मरथसंज्ञस्य महर्द्धेर्नृपस्य वनमालादेव्याः शिवनामा पुत्रोऽभूत् । स उद्भूतः कल्पवृक्ष इव यत्नेन पाल्यमानः क्रमेण वर्द्धमानः काकपक्षधरोऽभूत् । तस्मिन् साक्षिमात्रकृतगुरौ प्राज्ञवरे परस्परं गृहीतसंकेता इव सकलाः कलाः प्राविशन् । स यौवने कुलोद्भवा राजकन्याः पर्यणैषीत्, ताभिर्युतो लताभिस्तरुरिव रेजे ।

एकदा प्रासादे स्थितस्य सस्त्रीकस्य नगरीबाह्योद्याने सागराचार्यः समवससार । तत्र कामसमृद्धनामा सार्थवाहो मासक्षपणपारणे तं महर्षिं भक्त्या प्रत्यलम्भयत् । पात्रदानप्रभावात् कामसमृद्धस्य गृहे गगनाद् वसुधाराऽपतत् । यतः –' पात्रे दानात् किं न भवति ?' । शिवकुमारः आश्चर्यकरं तच्छ्रुत्वा सागराचार्यं समुपेत्य ववन्दे । तच्चरणसमीपप्रदेशे राजहंस इवोपविवेश च । ततश्चतुर्दशपूर्वी सागरो महामुनिरपि सपरिवारं शिवं प्रत्यार्हतं धर्ममुपदिदेश । विशेषतः प्राज्ञस्य तस्य स्फटिकस्वच्छे हृदये स महर्षिः संसारासारतां प्रवेशयामास ।

शिवकुमार सागराचार्यं पप्रच्छ—" भगवन् ! किं पूर्वजन्मभवोऽय स्नेहोऽस्ति '; यतो भवत· पश्यतो मेऽधिकाधिक प्रमोदो जायते । " इत्याकर्ण्यावध्युपयोगेन ज्ञात्वा मुनिरुवाच " वत्स ! त्व पूर्वजन्मनि प्राणेभ्योऽप्यधिकः प्रियो ममानुजआसीः । पूर्वं गृहीत-व्रतेन मया प्रयासेन त्वमनिच्छन्नपि परलोकहितकामनया व्रतं ग्राहित· । आयुःक्षये सुधर्मे कल्पे आवा परमर्द्धिकौ सुरावभूव । तत्रापि कुमुदचन्द्रयोरिवावयो· स्नेहोऽभूत् । अस्मिन् भवेऽह वीतरागः स्वपरयो समानदृक्, त्व त्वद्यापि सरागत्वान्मयि पूर्वजन्मस्नेहभागसि ।

तत शिवकुमार उवाच—" भगवन् ! अहं पुरापि व्रतग्रहणाद् देवोऽभूवम् । तदिहापि भवे प्राग्जन्मवन्मे व्रत देहि । यावदह पितरौ व्रतहेतवे पृष्ट्वाऽऽगच्छामि तावत् पूज्यपादा भवन्तो मयि कृपालव इहैव विराजन्ताम् । ततो गत्वा शिवकुमारः पितृपादान् न्यवेदयत् । " अद्य सागरदत्ताचार्यस्य धर्मदेशना मयाऽश्रावि । तत्प्रसादात् ससारासारताऽधिगता । तत· संसाराल्लतापुञ्जाद् भारिक इवाह विरक्तोऽस्मि । तन्मा प्रव्रज्याग्रहणायानुमन्यध्वम् । अद्य मोहतमस· प्रत्यूषसमः सागरर्षिर्मे शरणमस्ति । एतन्निशम्य पितराववोचताम्—" वत्स ! यौवने व्रत मा ग्रही·, अद्याप्यस्माकं त्वत्क्रीडादर्शनजं सुखं न पूर्यते । एकपदेऽपि त्वं कथमत्यन्तं निर्ममोऽभूः ' अपरिचितानिवास्मान् हि जिहासिसि । यदि त्वं नो भक्तोऽसि, यदि चास्मानापृच्छ्य गमिष्यसि, तदाऽऽवयो रसना नकारवातुलैव भविष्यति ! एवमनाज्ञापयतोः पित्रो शिवकुमारो गन्तुमसमर्थो गृह एव सकलसावद्यव्यापारविमुखो भावयतिरभूत् । सागरदत्तर्षेरह शिष्य इति निश्चयवान् मौनमालम्ब्य तिष्ठति स्म । ' यतो मौनं सर्वार्थसाधनम् । बलादपि मोक्तुमुपवेशित· स न किञ्चिदपि जघास । मह्य किञ्चिदपि न रोचत इत्येव पुनः पुनरुवाच । एवं शिवाभिलाषिणा शिवेनोद्वेजितो राजा शिवमित्रं दृढधर्म श्रेष्ठिपुत्र समाहूय समादिशत् । " वत्स ! व्रतार्थमनादिष्टेन पाषाणनिष्ठुरहृदयेन मम पुत्रेण शिवकुमारेण मौनमवालम्ब्यत ।

व्यर्थकालो ग्राम इव खरः मंदचारो हस्तीव चाङ्कुशशतैरपि न बुध्यते । वत्स ! त्वं कथमपि मे शिवं प्रतिबोध्य भोजय । एवं कृतवता त्वया मम किं किं नोपकृतं भवेत् ? । हे महाशय ! मम जीवविहगः शरीरनीडात् गन्तुमुद्यतः प्रत्याशापाशबन्धेन नियन्त्रय । माज्ञो दृढधर्मोऽपि राज्ञ इत्याज्ञां स्वीकृत्य शिवकुमारसकाशं जगाम । क्रमशः स नैषेधिकीं कृत्वा तस्य भवनमध्ये प्रविश्येर्यापथिकीं प्रत्यक्रमीत् । द्वादशावर्तं वन्दनं कृत्वा भूमिं प्रमार्ज्य मामनुजानीहीति निगदन्नुपविवेश । इति शिष्टविशिष्टाचारं दृष्ट्वा शिव उवाच—अहो दृढधर्म ! अयं विनयो मया सागराचार्यसमीपे साधूनामदर्शि स मयि कथं घटते ?

ततो दृढधर्मोऽवदत्—" सम्यग्दृष्टीनां जनानां यत्र कुत्रचित् समभावो भवति स समभावो हि सर्वस्य विनयार्हः । यस्य कस्यापि जनस्य समभावयुक्तं मानसं भवति स वन्दनीयो भवत्येवात्र न दोषशङ्काकलङ्कः । हे कुमार ! अहं त्वत्पार्श्वे साम्प्रतमेतत् प्रष्टुमागतोऽस्मि, त्वं रसंज्वरव्याकुल इव कुतो भोजनमत्याक्षीः ? । ततः शिव उवाच—" मम पितरौ व्रताय मां न विसृजतः, अतएव भावयतीभूय गृहाद् विरक्तस्तिष्ठामि, यदा च पितरौ उद्विज्य मयि रागं त्यक्त्वा व्रतग्रहणाय मामाऽऽदिशतोऽतो न भुञ्जे । " दृढधर्मोऽवोचत्—" हे महाशय ! यद्येवं तर्हि भुञ्जीथाः । यतो धर्मो देहाधीनः, देहश्चाऽऽहाराधीनः । महर्षयोऽपि निरवद्यमाहारं गृह्णन्ति, निराहारे शरीरे तु कर्मनिर्जरा दुष्करा जायते ।" शिव उवाच—" प्रेमन् ! हे श्रेष्ठिपुत्र ! निरवद्याहारोऽपि मम न सम्पद्यते, तस्मादनशनमेव श्रेयः ।" दृढधर्मोऽवदत्—" अतः परं त्वं मे गुरुस्त्वहं शिष्यः । यन्निरवद्यं वाञ्छसि तत्सर्वं सम्पादयिष्यामि ।" शिव उवाच—" मित्र ! तर्हि निरन्तरं षष्ठं कृत्वाऽऽचाम्लेनाहं पारणं करिष्यामि ।" ततः प्रभृति सामाचारीचतुरो दृढधर्मो भावयतिनः शिवकुमारस्य विनयं कर्तुमारेभे, तपस्यतः शिवस्य द्वादश वर्षाणि व्यतीयुः, तथापि मोहार्तस्य पितरौ गुरुसकाशे न तं विसृजतः स्म । क्रमेण शिवः कालं कृत्वा ब्रह्मलोके

महाद्युतिर्विद्युन्मालिनामा इन्द्रसामानिकः सुरोऽभूत्।

हे श्रेणिक! आसन्नच्यवनस्यास्य पुण्यात्मन इयं द्युतिः सम्प्रति भासते। अयं प्राग् ब्रह्मलोकेन्द्रसमानद्युतिरासीत्। अयमस्मिन्नेव पुरेऽस्माद्दिनात् सप्तमे दिने ऋषभश्रेष्ठिनो जम्बूनामा पुत्रोऽन्तकेवली भविष्यति। तदा प्रसन्नर्षिसमीपे विद्युन्मालिनि सुरे गते तस्य चतस्रः स्त्रियस्त महामुनिं प्रत्येवं पप्रच्छु:—"अस्माद्विद्युन्मालिसुराद्वियुक्तानामस्माकं पुनः कापि तस्य समागमो भविष्यति न वा?।"

ऋषिरुवाच—"देव्य! अस्मिन्नेव पुरे समुद्रः १ प्रियसमुद्रः २ कुबेरः ३ सागरः ४ इति चत्वारः श्रेष्ठिनः सन्ति। तेषां चतुर्णां यूयं चतस्रः पुत्र्यो भविष्यथ। तत्र मनुष्यत्वं प्राप्तेनामुना सह युष्माकं सङ्गमो भावी। ततः सुरासुरसेवितचरणारविन्दो दयासागरः श्रीमहावीरः प्रभुर्भव्यकमलदिवाकरोऽतिशयर्द्धिपात्रमन्यत्र विहर्तुमगमत्।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप–परिशिष्टपर्वणः श्रीतपोगच्छाधिपति–शासनसम्राट्–सूरिचक्रचक्रवर्ति–आचार्यवर्य–श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ–शान्तमूर्ति–आचार्यश्री–विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि–प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न–व्याख्यानवाचस्पति–पन्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते गद्यानुबन्धे जम्बूस्वामिपूर्वभववर्णनात्मकः प्रथमसर्गः समाप्तः॥ १॥

# द्वितीय सर्गः

## श्रीजम्बूस्वामिकथा ।

इतश्च राजगृहेनगरे पुष्कललक्ष्मीरिन्द्र इव नृपवरः श्रेणिको राज्यं पालयामास । तदीयसभाऽलङ्कारो नरवरशिरोमणिर्धर्मकर्मश्रेष्ठः श्रेष्ठी ऋषभदत्तनामाऽभूत् । स समस्तेष्टसिद्धिप्रदमन्त्रवर्णवत् “ मम देवोऽर्हन् गुरुस्तु साधु ” रित्येव रात्रिन्दिवं जपन्नासीत् । तन्मनोबलं सदा गुरुवचनकतककर्पूर्णयुतं विगतदुर्ध्यानमलं विमलं बभूव । तस्यैश्वर्यं सरोवरस्य सलिलमिव पथिवृक्षस्य फलमिव केषां केषां प्राणिनामुपकारकं नाभूत् ? । भव्या धर्मानुरागिणी गव्या हंसानुहारिणी तस्य धारिणीनाम्नी सधर्मचारिणी बभूव । तस्या विपुलतमगाम्भीर्यधैर्यमाधुर्यप्रभृतिगुणेषु सत्स्वपि शीलगुण एव सम्यक् प्रथासौ बभूव । यतः कुलाङ्गना शीलालङ्कारा भवन्ति । सा सती गुप्तसमस्ताङ्गी नीरङ्गीभूषिणी सूर्यस्यापि करस्पर्शासहिष्णुरिव समचरत् । शीलविनयप्रभृतिनिरतिशयस्वच्छगुणैः सागरमध्ये गङ्गेव प्राणनाथस्य हृदये सा व्यलीयत । नख–मांसयोरिव नित्यमिलितयोस्तयोर्द्विदेहैकहृदययोः स्नेहोऽखण्डितो बभूव । एकदाऽपत्यरहिता धारिणी निष्फलया लतया इव मम निःसन्तानं जन्म व्यर्थमिति दध्यौ । धन्यजीवनानामेव स्त्रीणां क्रोडे सुधारस इवाङ्गे शीतलत्वं जनयन् पुत्रः क्रीडति । तथापि पुत्ररहितो गृहनिवासः पापाय तापाय च जायते, लवणहीन–कुभोजनवन्मम गृहनिवसनं न स्वदते । ततः पुत्रचिन्तातुरा धारिणी रहसि तत्पतिना पृष्टा–“ प्रिये ! कुतो विषीदसि ? ” ततो धारिणी प्राणनाथं मानसं दुःखं निवेदयामास । यद्यपि प्राणपतौ सा निजदुःखं स्थापयामास, तथापि तन्नाक्षीयत । प्रत्युत स्नेहपूर्तिविरहाद् भूयोऽधिकमवर्द्धिष्ट । सा तेन हृदयशल्यान्तुल्यदुःखेन नित्यं द्वितीयाचन्द्रकलेव कृशभावमशिश्रियत् ।

एकदा धारिणीपतिर्धारिणीं पुत्रालाभदु:ख विस्मारयितुकाम: प्रेमपाथोधिप्रवाहोपमया वाचोवाच–" प्रिये ! वयं वैभारभूधरमद्य गच्छाम:, तत्र नन्दनवनोद्यानरमणीयोद्याने रंस्यामहे "। ततो धारिणी पतिदेववाच माननीयतयाऽऽधिविस्मारणकामनया च स्वीचकार । तत ऋषभदत्तोऽपि सज्जीकृते हंसलोमकोमलतूलिके रथे प्रियया सह समारुरोह । एवं तौ जायापती संयोजिताश्वं श्रेष्ठमहारथमध्यारूढो वैभारगिरिं प्रति प्रययतु ।

रथोपरि समारूढ ऋषभदत्तो मार्गे स्वप्रिया वार्तयति–" हे प्रिये ! इयं वाह्यालीभूमिर्वाह्यमानाश्वफेनबुद्बुददन्तुरा श्रेणिकनरेशस्य प्रतिभाति । इमे नगरसमीपतरवो गजबन्धनोन्मूलितत्वक्स्कन्धा मत्तगजराजाऽऽलानतां सूचयन्ति । अमूनि सुन्दराणि गोकुलानि मदीयमहारथध्वनिना वृषभभाङ्कारै समुत्थापितश्रवणवत्समूहानि राजन्ते । हे कृशोदरि ! एते पिकीस्वरौषधीभूतपल्लवास्तरुणरसालतरवः शोभन्ते। इमे रथनिर्घोषभीरवो मृगा भूमिं जिहासन्त. प्रायो वायुमारूढा इव गगन गच्छन्ति । वारिवर्षिण इमेऽरघट्टा द्वितीयमूर्तिधारिण. पुष्करावर्तमेघा इव इक्षुवणेषु राजन्ते । एव दर्शनीयदर्शनै. प्रिया विनोदयन् सपरिवार ऋषभो वैभारगिरिमगमत् । तौ दम्पती रथाद् वैभारगिरिवरोद्यानदिदृक्षानृत्यन्मनोरथौ समुदतरताम्। मार्गस्थप्रत्येकतरूणां नामधेयानि पृच्छन्ती स्वादूनि निर्झरजलानि भूयोभूय: पिबन्ती पदेपदे स्निग्धतरुच्छायासु विश्राम्यन्ती शीतलकदलीदलै. सुखस्पर्शमाचरन्ती शुकालापैर्हसन्ती मृगबालेषु वत्सला क्रोडाऽऽरोपितबालवानरीषु परमोत्कण्ठिता धारिणी पतिदत्तकरावलम्बनेन तत्सुखेन शनै शनैर्गिरिमारोहयाञ्चक्रे । तत्पर्वत ऋषभदत्तो मनोहरा पर्वतोद्यानसम्पदमङ्गुल्या धारिणीं दर्शयांबभूव–" हे प्रिये ! फलभारनम्रा इमा मातुलिङ्गी: प्रेक्षस्व । ताम्रवर्णपुष्पैर्विश्रान्तसायन्तनमेघा इवेमा दाडिमीः पश्य । अमी ताला नृत्यन्मयूरकलापानुकारिदला मण्डपीभूतमृद्वीकामण्डपाः सूर्यकिरणानामपि दुर्गमाः प्रतिभासन्ते । अलिकुलच्छलात्

परस्परसौरभ्यदानैरेता पुष्पजातय स्वाजन्यमुद्घोषयन्त्यत्र । जम्बूकदम्बमाकन्दपारिभद्रप्रभृतितरुभिरय गिरिश्छायया चोलक वसान इव प्रतिभाति । ऋषभ श्रेष्ठी तत्र शीघ्रमागत खेचरमिव सिद्धपुत्र यशोमित्र श्रावक स्वत्र भुमिवादर्शत् । ततश्च ऋषभ श्रेष्ठी सिद्धपुत्र मवार्तयत्–"त्व मे खलु साधर्मिकोऽसि तद् कथय क्व गमिष्यसि ?"। स उवाच–" श्रेष्ठिन् ! अस्मिन्नुद्याने भगवत श्रीमहावीरस्य शिष्य पञ्चमो गणधर सुधर्मा समवसृतोऽस्ति । हे मित्र ! त वन्दितुमह गच्छामि । यदि ते तद्वन्दनेच्छा तर्हि त्वमपि त्वर, अहमग्रेसरामि । श्रेष्ठ्युवाच–' हहो मित्र ! तत्राहमपि सपत्नीक आगच्छामीति तेनैव सह तौ दम्पती जग्मतु । ततस्ते त्रयोऽपि यथाविधि द्वादशावर्तवन्दनेन श्रीसुधर्मस्वामिन भक्त्या वन्दित्वाऽग्रे समुपाविशन् । बद्धपाणिपुटास्ते च सुधर्मस्वामिनो धर्मोपदेशामृत श्रवणपुटैरत्तितरामपु ।

अथावसरे सिद्धपुत्र श्रीसुधर्मस्वामिनमप्राक्षीत्–" भगवन् ! यन्नाम्ना जम्बूद्वीप ख्यात सा जम्बू कीदृशी विद्यते ? " तत सुधर्मस्वामी तां जम्बू आत्यरत्नमयाकृतिमकथयत्, तन्मानप्रभावस्वरूपादि चाख्यत् । तदा धारिणी चावसरमासाद्य भगवन्त गणधरमपृच्छत्–" प्रभो ! मम पुत्रो जनिष्यते न वा " इम प्रश्नमाकर्ण्य सिद्धपुत्रोऽवदत्–" हे धारिणि ! महापुरुष सावद्य प्रष्टुं नार्हसि, यतो महर्षय जानन्तोऽपि सावद्य न जल्पन्ति, हे कल्याणि ! जिनपादोपदेशेन निमित्तज्ञानकुशलोऽहमेव तत्कथयामि तच्छृणु–धीरस्वभावो मनसा कायेन च पराक्रमी शिलापृष्ठे समुपविष्ट सुधर्मास्वामी त्वया यत् पुत्रजन्म पृष्टस्तन्नेद बोध्यम्, " यदा स्वप्ने त्व क्रोडस्थित सिंह द्रक्ष्यसि ततो गर्भे पुत्रसिंह धारयिष्यसि, समये प्रसिद्धजम्बूवृक्षवद् गुणरत्नमयश्च जम्बूनामा देवताकृतसन्निधिस्तव पुत्रो भविष्यति । ततो धारिण्युवाच–" विद्वन् ! तर्हि जम्बूदेवतामुद्दिश्याष्टोत्तरशतमाचाम्ला मह करिष्ये " । ततस्ते त्रयोऽपि वन्दित्वसुधर्मस्वामिचरणकमलौ वैभारगिरिशिखरादुत्तीर्य स्वपुरं जग्मु । ततस्तौ दम्पती सिद्धपुत्रवचनप्रत्याशया गृहस्थतां पालयन्तौ काल गमयामासतु ।

एकदा धारिणी स्वप्ने श्वेतवर्णं सिंहमपश्यत्, तेनातिप्रसन्ना सा तत्स्वप्नं स्वामिनं कथयामास । ऋषभः प्रत्युत्ततार—" प्रिये ! अनेन स्वप्नेन मम विश्वासोऽजनि यत् सिद्धपुत्रवचनं तत् सर्वं सत्यमेव । हे महाभागे ! पवित्रचरित्रः शुभलक्षणो जम्बूनामा पुत्रस्तवावश्यमुत्पत्स्यते । " अथ समये जाते तदा विद्युन्मालिसुरो ब्रह्मदेवलोकाच्च्युत्वा धारिणीकुक्षौ शुक्तौ मौक्तिकमणिरिवावततार । ततो धारिण्या देवगुरुपूजनेषु दोहदः समजनि, यतो नारीणां दोहदा गर्भभावानुसारिणो भवन्ति । ऋषभ श्रेष्ठी भूयसा धनेन तद्दोहदमपूपुरत्, श्रेष्ठ्यपि धनव्यये धर्मकार्ये उत्पन्नदोहद इवाभूत् । क्रमेण धारिणी पुण्यद्गर्भोऽतिमन्दं गर्भक्लेशागमभीत्या सावधानेव सञ्चचार । तस्याः कपोलफलकावतिपाण्डुतया प्राभातिकचन्द्रबिम्बसदृशावभूताम् । ततः सार्धसप्तदिनाधिकनवमास्या धारिणी दीप्तिजितसूर्यं पुत्रं प्रासूत । तदर्षभस्य गेहे मुक्ताचूर्णेव घटितैरतिविशदैरक्षतैः पूर्णानि सुवर्णपात्राणि प्रविविशुः । श्रेष्ठिनि कुलवृद्धस्त्रीक्षिप्तैश्च्युतैर्दूर्वाङ्कुरैस्तदासनाऽऽसन्नभूमितले दूर्वावणमिव बभूव । ऋषभगृहद्वारे सकलकल्याणप्रधानानि बहुविधानि तूर्यवर्याणि लक्ष्मीनृत्यनिबन्धनं नेदुः । कुलाङ्गनाश्च नवकुसुमस्तबकभूषितकेशपाशा मधुमत्तकोकिलस्वरेण सगायन्त्यो ननृतुः, ऋषभश्च विशेषतो देवगुरुपूजां व्यधात् । प्रार्थ्यमानोऽर्थिभिस्तेभ्योऽत्यर्थमर्थममन्दानन्दतुन्दिलो व्यतार्षीच्च । शुभदिने सानन्दः श्रेष्ठी स्वयं सूनोर्जम्बूतरुनाम्ना जम्बूरिति नामाकर्षीत् । पितरौ तं शिशुमङ्कगतमुल्लापयन्तौ रात्रिन्दिवं विस्मृतान्यकार्यौ हर्षप्रकर्षवातुलावभूताम् । जम्बूकुमारोऽपि पित्रोरङ्कालङ्कारीभूतः क्रमेण तयोर्मनोरथवद् ववृधे । पित्रोराशालतातरुः स ऋषभनन्दनः क्रमेण यौवनवयः प्रपन्नः पाणिपीडनयोग्यो बभूव ।

इतश्च तस्मिन्नेव नगरे समुद्रप्रियनाम्नः श्रेष्ठिवर्यस्य पद्मावती नाम्नी स्त्री बभूव । सम्पदा समुद्रस्येव समुद्रदत्तनाम्नः श्रेष्ठिनो गुणवती कनकमालाऽभिधा स्त्री बभूव । तथाऽद्भुतलक्ष्म्या गरीयसः सागरदत्तस्य विनयवती विनयश्रीनाम्नी भार्याऽभवत् । परमद्धर्या

कुबेरस्येव कुबेरदत्तनाम्न श्रेष्ठिनः शीलधनवती धनश्रीनाम्नी पत्नी बभूव। एतेषां जायापतीनां दिवश्च्युता विद्युन्मालिसुराङ्गना क्रमेण वक्ष्यमाणनाम्ना बभूवुः। यथा—समुद्रश्री १ पद्मश्री २ पद्मसेना ३ कनकसेना ४ चेति। तथा कुबेरसेनस्य कनकवतीनाम्नी भार्या बभूव। श्रमणदत्तनाम्नः श्रीषेणानाम्नी पत्नी बभूव। वसुषेणनाम्नो वीरमतीनाम्नी प्रियाऽभूत्, वसुपालितनाम्नो जयसेनानाम्नी वनिताऽभूत्। तेषां दम्पतीनां क्रमेण नभःसेना १ कनकश्रीः २ कनकवती ३ जयश्री ४ श्चेति दुहितरोऽजायन्त।

एकदा तासामष्टानामपि कन्यानां पितरो विनयोत्सुका जम्बूजनकमृषभं प्रार्थयामासुः—“आर्यवर्य! अस्माकं रूपलावण्यमनोहरा कलाकलापपारदृश्वर्यो गुणैश्वर्योऽप्सरःसमा अष्टौ कन्याः सन्ति। तासां विवाहकल्याणमिदं यौवनं प्राप्तमस्ति। तदनुरूपं वरं तव जम्बूकुमारं नन्दनमालोकामहि। ये कुलशीलवयोरूपप्रभृतयो वरगुणा अपेक्ष्यन्ते ते सर्वे जम्बूकुमारे दृश्यन्ते। अयं वरो बहुपुण्यैर्लभ्योऽस्ति। तासामस्मत्कुमारीणां त्वत्प्रसादादयं जम्बूकुमारो द्विजराजानां चन्द्र इव वरो भवतु। त्वं श्रीमान् कुलीनश्चासि, तत्त्वयि न प्रार्थना न लज्जायै। किं बहुना? सर्वथा विवाहसम्बन्धं विधायाऽस्माननुगृहाण” सूनुविवाहे स्वयमप्युत्कण्ठितस्तैः प्रार्थितश्चर्षभदत्तोऽपि हर्षविशेषाद् वचनं स्वीचकार। ता कन्या जम्बूनाम्नेऽतिश्रेयसे वराय वयं पितृभिर्वितीर्णाः स्म इति ज्ञात्वा धन्यमन्या मुमुदिरे।

अत्रान्तरे भगवान् सुधर्मस्वामी विहरन् भव्यप्राणिनो बोधयस्तत्रैव नगरोद्याने समवससार। अथ श्रीसुधर्मस्वामिसमवसरणवृत्तान्ता श्रुतिमात्रो जम्बूकुमारः स्कन्दवत् मरुदपुलकाङ्कुरः समजनि। ततो जम्बूकुमारः समवसृतं गणधरवरं सुधर्माणं वन्दितुं पवनवेगेन रथेन तत्स्थानमाश्रयत्। स श्रावकशिरोमणिः सुधर्माणं प्रणम्य पीयूषकण्डूषकल्पां तन्मुखारविन्दनिस्यन्दमानां धर्मदेशनां श्रवणपुटाभ्यां निपीय हृतमाग्यपरमदुर्लभभववैराग्यभानूदयदलितहृदयान्धकारोऽभूत्। ततः श्रीसुधर्मप्रभुं प्रणिपत्य स भवबन्धकर्तरीं परिव्रज्या

मादातुं न्यवेदयत्—" हे परमेश्वर ! यावदहं पितरौ पृष्ट्वाऽऽगच्छामि तावत्त्वमत्रैवोद्याने धर्मतरुशोभामाश्रय । " सुधर्मस्वामिना तथाऽस्त्विति स्वीकृते जम्बूकुमारोऽनिलवेगजितं स्यन्दनमधिरुह्य शीघ्रं नगरद्वारमाजगाम । तदा पतिततिलस्यापि यथा भूमिस्पर्शावकाशो नाभूत्तथा गजाश्वरथाकुलं नगरद्वारमभवत् । ततो जम्बूकुमार एवमचिन्तयत्—" अहं यद्यनया नगरद्वारा पितृभवनं प्रवेष्टुं प्रतीक्षिष्ये तदा गरीयान् कालो व्यतिगमिष्यति । तत्रोद्याने श्रीसुधर्मस्वामिनं प्रतिष्ठाप्य भवनगमनाय विहङ्गमायमानस्य मेऽत्र स्थातुं नोचितम् । तस्मादन्येनैव पुरद्वारेण रथं त्वरयन् प्रविशामि । यत उत्कण्ठितस्यान्यो मार्गः श्रेयान्, प्रतीक्षणं न वरम् " इति विचिन्त्य स ऋषभनन्दनोऽतिशीघ्रं यावद् द्वारान्तरं जगाम तावत् तत्रापि वप्रं यन्त्रितमवलोकयामास। वप्रोपरितनभागे यन्त्रेषु गगनतलान्निपतत्कुलिशगोलककल्पा महाशिला लम्बिता अपश्यत् । स एवं व्यचारयत्—" एतादृश उपक्रमः परचक्रभयान्निर्मितोऽस्ति तदनर्थबहुलेनैतेन द्वारेणालम् । अनेन द्वारेण प्रविशतो ममोपरि यदि शिला पतेत् तदा नाहं न मे रथो न रथ्या सारथिश्च न वर्तेत । एवं चाविरतो मृत्युं प्राप्य दुर्गतिं प्राप्नोमि, यतः कुमरणप्राणिना दुर्गतिर्भवत्येव, तेषां सुगतिस्तु गगनकुसुमवद् दुर्लभा । अहं स्वार्थभ्रष्टो मा भूवं तस्मादितोऽहं पुनः परावृत्य श्रीसुधर्मस्वामिचरणारविन्दमकरन्दास्वादमिलिन्दो भवामि " एवं विचिन्त्य ऋषभनन्दनः कुटिलग्रह इव स्वरथं वालयित्वा पुनस्तमेव गणधरचरणकमलालङ्कृतं प्रदेशं जगाम ।

तत्र जम्बूकुमारः श्रीसुधर्मस्वामिनमभिवाद्य यावज्जीवं मनसा वचसा कर्मणा च ब्रह्मचर्यं स्वीकरोमीति विज्ञपयामास । ततो भगवता गणभृताऽनुज्ञातो जम्बूकुमारो नियममङ्गीकृत्य प्रसन्नः कामविकाररहितो निजं धाम जगाम । पित्रोश्च तत्रैवं निजगाद—" हे पितरौ ! अहं गणधरश्रीसुधर्मस्वामिमुखकमलादद्य सर्वज्ञप्रणीतं कर्मरोगशमनैकभेषजं धर्ममश्रौषम् । तेन जातभववैराग्यं परिव्रज्यां ग्रहीतुमुद्यतं

मामनुजानीतम् । यत एष संसारो जन्मिनो कारागारसहोदर खलु प्रतिभाति ” । तन्निशम्य तदीयपितरौ गद्गदस्वरावेवमूचतु — “ वत्स ! त्वमसमयेऽस्मदाशालतोन्मूलनप्रभञ्जनो मा भू । इदानीमावामिदं चिन्तयाव—यत् त्वं सवधूको भविष्यसि, लोचनकुमुदचन्द्र नन्दनन्दनवदनं द्रक्ष्याव ” । विषयभोगयोग्येऽस्मिन् यौवने प्रव्रज्याग्रहणसमयो न तवास्ति । एतस्योचितमाचारं किञ्चिदपि किं न कामयसे ” । हे वत्स ! यदि तव प्रव्रज्याया प्रचण्डपवनवेगवदाग्रहो विद्यते तथापि तव गुरवो वय खलु स्म, इति तावदस्माक किञ्चिद् वचनमङ्गीकुरु । वत्स ! या अष्टौ कन्यास्तुभ्यमस्माभिर्वृतास्तासा पाणिग्रहणेनास्माक विवाहकौतुकं पूरय । कुमार ! एवं कृत्वा त्व निःशङ्कं परिव्रजेः । अथ वयमपि कृतार्थास्त्वामनुप्रव्रजिष्याम ।

तदा जम्बूकुमार उवाच—“ आर्यौ ! युष्माकमस्मिन् निर्देशे कृते बुभुक्षोरशनादिव प्रव्रज्याग्रहणादहं न निर्वेद्य ” पितरावा-मित्युक्त्वा कन्यापितृकृपापरौ शीघ्रमूचतु —“ असौ मत्कुमारोऽस्मदाग्रहेणाऽष्टाना श्रेष्ठिनामष्टाभि कन्याभि सह विवाहं करिष्यति ” । अथ पुनः कन्यापाणिग्रहणानन्तरं मत्कुमार प्रव्रजिष्यति । हे श्रेष्ठिनो ! यदि यूय पश्चात्तापपाप करिष्यथ, तदाऽधुना तद्विवाहे न कारयत । एव कथयतामस्माकं दोषो न देय ” । तच्छ्रुत्वाऽष्टावपि सखीका महेभ्या अस्मिन् विषये किं कर्तव्यमिति विषीदन्तो निर्णेतु परस्परं संजल्पन्ति स्म । तेषां श्रेष्ठिनां संलापमाकर्ण्य ता कन्या ऊचुः—“ हे पितरो ! विचारेणालम् । अत्र निश्चय शृणुत—युष्माभिर्वय जम्बूकुमाराय दत्ता स्मस्तर्हि नोऽयमेव स्वामी, वय नान्यस्मै दातव्या, लोकेऽप्येव प्रसिद्धमस्ति ।

“ सकृज्जल्पन्ति राजान, सकृज्जल्पन्ति साधव ।
सकृत् कन्या प्रदीयन्ते, त्रीण्येतानि सकृत्सकृत् ॥ ६ ॥ ”

पितृचरणैर्जम्बूकुमाराय वयं समर्पिता. स्म', तस्मात् स एवास्माकं गति.। वयं तदधीनजीविताः संजाता' स्मः। तस्माद् यदि जम्बूकुमार प्रव्रज्यामितरद् वा करिष्यति, तदेवास्माकं पतिव्रतानामुचितमस्ति।" ततः कन्याजनका जम्बूपितरमूचुः—"साम्प्रतं विवाहायोद्यता भवन्तु, प्रथमं वचनं प्रमाणम्"। ततस्तैः श्रेष्ठिभिः सह ऋषभदत्तेन सह नैमित्तिकमुखात्तद्दिनात् सप्तमदिवसे विवाहमुहूर्तं निश्चिक्ये। ते महेभ्या' सोदरा भ्रातर इव मिलित्वा विशालं विवाहमण्डपं रचयामासुः। तन्मण्डपोपरि विचित्रवर्णवस्त्रैरुल्लोचो गगन-तलादाकृष्टसन्ध्यामेघखण्डैरिवाभूत्। तत्र सर्वत उच्चूलीकृतानि स्फुरन्ति मुक्तामाल्यानि चन्द्रेण स्वकिरणसर्वस्वं न्यासीकृतमिव प्रतिभान्ति स्म, स मण्डपः पवनान्दोलितपल्लवैरतितारैस्तोरणैर्वराह्वानेङ्गितमिव विपञ्चयन्नशुभत्। पुनश्च मण्डप' परित' स्वस्तिकन्यस्त-मौक्तिकैर्मङ्गलतरूणामुद्भवायोप्तबीजस्तोम इव व्यराजत्।

अथ जम्बूकुमारं शुभमुहूर्ते वर्णकेऽक्षेपि। कुसुम्भरक्तवस्त्रधारी स उदयकालिक सूर्य इव रेजे। वर्णके क्षिप्तास्ता. कन्या अप्यसूर्यम्पश्या राजमहिष्य इव बहिर्नाचरन्। अथ शुभे क्षणे स कुमारस्ताः कुमार्यश्च स्वस्वस्थानस्थिता विधिवन्मङ्गलस्नानमकार्यन्त। कृतस्नानस्य जम्बूकुमारस्य क्षरज्जलाः केशा आसन्नलोचभयादश्रु मुञ्चन्त इव रेजु'।

ततो गन्धकार्य. स्त्रियं उत्तंसलीलां कुर्वता कर्पूरागरुधूपेन जम्बूकुमारकेशानध्यवासयन्। गन्धकार्या तस्य कुमारस्य मूर्द्धनि पुष्पमाल्यगर्भितो जात्याश्वकन्धराकुटिलो धम्मिल्लो वबन्धे, जम्बूकुमारो मुखकमलप्रान्तविश्रान्तमरालयुगलशोभे तारे मौक्तिककुण्डले दधार। आनाभिलम्बितं फेनबुद्बुदावलिसंनिभं मुक्ताहारं परिदधे। चन्दनविलिप्ताङ्गः सर्वाङ्गामुक्तमौक्तिकस्तारावलिभि. पूर्णचन्द्र इव भृशं चकाश। ऋषभनन्दनो देवदूष्ये इवादूष्ये दशासहिते धवलवसने विवाहमङ्गलार्थं परिदधौ। तत स जात्याश्वमध्यारोहत्।

मायूरच्छत्रधारी स्वसदृशवयोवेषानुचरैः परिकरितो, नीराजीकृतमुखो गीयमानबहुमङ्गलो वधूटीभ्यामुभयत उत्तार्यमाणलवणो जम्बूकुमारो वाद्यमानमङ्गलातोद्य पठन्मङ्गलपाठको विवाहमण्डपद्वारं शीघ्रं ययौ । तत्र सुवासिनी साक्षात् तनुमत कामदेवस्येव जम्बूकुमारस्य दध्यादिमङ्गलद्रव्यैरर्घं ददौ । कुमारो द्वारि न्यस्त वह्निगर्भित शरावसम्पुट भङ्क्त्वा कल्याणसम्पद्गृह मातृगृह जगाम । तत्र सोऽष्टाभिः कुमारीभिः सह तत्रोपविश्य कौतुकोद्वाहमङ्गलमङ्गीचकार । ततश्च शुभलग्नसमये चतुरिकाऽन्तरे गत्वा पित्रोर्विनयेच्छुर्जम्बूकुमारस्ता कुमारिका परिणिनाय । ततो धारिणी तारामेलकके प्रसन्ना, कौतुकेषु ससम्भ्रमा, मङ्गलावर्ते सन्तुष्टा मधुपर्के स्मितमुखी, यौतके सावधाना, अञ्चलमोक्षणे चतुरा, प्रणामे सबाष्पनयना, क्रोडस्थापनेऽत्यन्तमुदिता, सती तनयविवाहकल्याण सुखमिति लेभे । यतः स्त्रियोऽपत्ये विवाहिते हृष्यन्ति ।

विवाहानन्तरं वरस्य वधूनां च तावद् यौतकमभूत् येन सौवर्णं पर्वतो भवेत् । ततः समाजसहचारिणा मङ्गलदीपेन, धवलमङ्गल मधुरं गायन्तीभिः कुलाङ्गनाभिः, पुरतो मधुरस्वरपूर्वकं वाद्यमानैर्मङ्गलतूर्यैः, गीत–नृत्य–वादित्ररमणीयेन प्रवर्तमानेन सङ्गीतकेन च हृष्टज्येष्ठ कनिष्ठपार्श्वगामिबन्धुभिश्च सह स परिणीतवधूभिः परिवृत्तो निजागारं प्रविवेश । ततः प्रथमतः सर्वज्ञं पश्चात् कुलदेवतां वन्दित्वा वधूवराणां करेभ्यो विवाहबद्धकङ्कणमोक्षणमभूत् । तदनन्तरं हर्षितौ धारिण्यृषभदत्तौ जम्बूद्वीपनाथस्य देवस्य स्वयं सविधिपूजां चक्रतुः । ततः सकलालङ्कारभासुरो जम्बूकुमारोऽपि निजवनिताभिः सह निवासभवनं जगाम । तत्रर्षभनन्दनः सभार्योऽपि ब्रह्मचर्यपरोऽस्थात् । यतो महाशया विकारहेतावुपस्थितेऽपि विकारहीना भवन्ति ।

## श्रीजम्बूकथानके प्रभवचोरवृत्तान्तः ।

इतश्चास्मिन् भरते विन्ध्यपर्वतसमीपे जयपुरं नाम नगरमस्ति । तस्मिन् विन्ध्यनामा राजाऽभवत् । तस्य प्रसिद्धौ प्रभवप्रभुनामानौ द्वौ पुत्रावभूताम् । एकदा विन्ध्यो राजा प्रभवे ज्येष्ठपुत्रे सत्यपि कनिष्ठाय प्रभुनामपुत्राय राज्यं केनचित् कारणेन ददौ । ततोऽपमानितो ज्येष्ठः प्रभवो जयपुरनगराद् बहिर्निःसृत्य विन्ध्याचलस्य विषमभूमौ वास निर्मायाऽस्थात् । तत्र सपरिवारः स खात्रखननैर्बन्दिग्रहणै-र्मार्गपातनैश्चौरैरन्यैश्च प्रकारैर्जीविका चकार ।

अथैकदा तस्य गुप्तचरा आगत्य कुबेरस्याप्युपहासिनीं जम्बूकुमारसम्पत्तिं विज्ञापयाञ्चक्रुः । जम्बूकुमारविवाहोत्सवे मिलितान् बहून् अत्यर्थम् धनाधिपतीनर्थचिन्तामणीनिव स्थितान् कथयामासुश्च । ततश्च स दस्युशिरोमणिः प्रभवोऽवस्वापनिका–तालोद्घाटिनीभ्या विद्याभ्या सहितस्तदैव जम्बूकुमारभवन प्रययौ । ततः प्रभवोऽवस्वापनिकया विद्यया जम्बूकुमारं विना सर्वं जाग्रतं लोकं स्वापयामास । साऽवस्वापनिका विद्या प्रचुरपुण्यशालिनो जम्बूकुमारस्य स्वापे नाशकत् । प्रायः पुष्कलपुण्यानामिन्द्रोऽपि विपत्तिदाने न समर्थः । ततो दस्यवो निद्रामुपागताना सर्वेषामपि भूषणवसनादिसर्वस्वं ग्रहीतु प्रावृतन् । ततो महामना जम्बूकुमारो लुण्टाकेष्वपि लुण्टत्सु कोपक्षोभ-रहितो लीलयेदमुवाच—“ भो भो दस्यवः ! इह निमन्त्रितानागतान् प्राघूर्णकान्छयानान् विश्वस्ताञ्जनान् मा स्पृशत, एषामह यामिको जागर्म्येषः । ” ततो महापुण्यप्रतापस्य जम्बूकुमारस्येदृशा वचसा ते चौराः स्तब्धशरीरा लेप्यमया इव बभूवुः, प्रभवोऽपि निभालयन् करेणुभिर्गजेन्द्रमिव ताभिः स्त्रीभि सह परिवृतं जम्बूकुमारं ददर्श, आत्मान च निवेदयामास—“ हे महात्मन् ! अह विन्ध्यनाम्नो राज्ञः पुत्रोऽस्मि, मां मैत्र्याऽनुगृहाणेति स्व परिचाययामास । हे मित्र ! स्तम्भनीं मोक्षणीं च विद्या त्वं मह्यं देहि, अह तुभ्यमवस्वापनिका

तालोद्घाटिनीं च विद्यां ददामि।" ।।ततो जम्बूकुमार उवाच–" हे प्रभव ! निर्मोहोऽहं नवोढा अपि स्त्रियोऽष्टावपि प्रभाते त्यक्त्वा दीक्षां ग्रहीष्यामि ।। भो प्रभव ! इदानीमप्यहं भावयतीभूतोऽस्मि, तेन हेतुना तवेयमवस्वापनिका विद्या मां स्वापयितुं नाशक्नोत् । हे भ्रातः ! मातरहमिमां ऋद्धिं तृणवत् परित्यक्ष्यामि, तर्हि मुमुक्षवे ते स्तेनस्य मे तवागया विद्यया किं प्रयोजनमस्ति ? । तच्छ्रुत्वा प्रभवोऽपि तामवस्वापिनीं विद्यां संहृत्य जम्बूकुमारं प्रणम्य कृताञ्जलिरुवाच–" हे मित्र ! इदानीं नवयौवनो विषयसुखं भुङ्क्ष्व । त्वं विवेक्ष्यसि, अत इमासु नवोढास्वनुकम्पस्व । इमाभिर्नवोढाभिः सह भुक्तभोगफलो भव । तत्पश्चाद् गृहीता प्रव्रज्याऽपि तव शोभिष्यते ।" जम्बूकुमारोऽप्युवाच–" हे मित्र ! विषयभोगजन्यं सुखं स्वल्पं नश्वरं च भवति । तर्हि नो दुःखहेतुनाऽमुना किम् ? । मायिनो विषयसेवनजं सुखं सर्षपादप्यल्पमपि, दुःखं तु प्रचुरं मधुबिन्दुप्रभृतिपुरुषवत् ।

## प्रभवं प्रति जम्बूकुमारकथिता मधुबिन्दुपुरुषकथा ।

तथाहि–कश्चित् पुरुषः सार्थेन देशाद्देशं परिभ्रमन् चौरमहानदीमटवीं प्रविवेश । तदा तस्यामटव्यां तं सार्थं लुण्ठितुं चौरव्याघ्रा अधावन् । ततः सर्वे सार्थनिवासिनो मृगा इव पलायामासुः । स च पुरुषः सार्थात् परिभ्रष्ट आकण्ठमागतैः प्राणैर्दूरच्छलकूपजलमन्महाटवीं प्राविशत् ।। तत्र विशालतरपर्वत इव स्यन्दमानमदनिर्झरः, उत्क्षिप्तकर आकाशान्मेघान् पातयितुमिव, पादप्रहारैरन्तःशुषिरिणीमिव पृथिवीं नयमनः आध्मातताम्रवद्रक्तनुसो जलधर इवातिगर्जन् साक्षाद् यमराज इव क्रोधोद्धुरो वनवारणो वराकं कान्दिशीकं तं पुरुषं प्रति दधाव । अहं मारयिष्यामि याहि याहीति प्रेरयन्निव शुण्डादण्डं धारयन् पुनः पुनस्तं पुरुषं वारणः ताडयामास । स पुरुषो भिया कन्दुक इव पतन्नुत्पतन् तेन हस्तिना गृहीतप्रायस्तृणावृतमेकं कूपं प्राप ।। तादृगवस्थायां गतो नूनं प्राणान् हरिष्यति, कूपे तु कदाचिज्जीवामीति स तत्र कूपे झम्पां

ददौ। यतः प्राणिना जीविताशा दुस्त्यजा भवति। तदवटतटे एको वटवृक्ष आसीत्, तस्यैक आयत पादो भुजङ्गमभोगवत् तत्कूपमध्ये लम्बमान आसीत्। कूपमध्ये पतन् स पुरुषोऽन्तरा तमेव पादमवलम्ब्य रज्जुबद्धघट इव तत्र तस्थौ। ततो हस्ती कूपमध्ये शुण्ड निवेश्य तन्मस्तक स्पृशन्नपि करेण त ग्रहीतु तथा न शशाक, यथा मन्दभाग्यो रसायनौषधिम्। तत्र स मन्दभाग्योऽधो भागे यदा दृशमदात्तदा तत्कूपमध्यस्थितमेक महाजगरमपश्यत्। सोऽजगरोऽपि मम दैवात् कवलमुपस्थितमिति ज्ञात्वा कूपमध्ये द्वितीयकूपमिव मुख व्याददौ। पुनश्चतुर्दिक्षु चतुरः सर्पान् प्राणापहारिणो यमबाणानिव तत्र स ददर्श। दुष्टचेतसस्ते च सर्पास्त पुरुष वीक्ष्य फणामण्डलमूर्ध्वीकृत्य तं दण्टुं धमनीसदृशैरास्यैः फूत्कारस्फूर्जितवातान् मुमुचुः। पुनः कृष्णश्वेतौ द्वौ मूषकौ त वटप्ररोह छेत्तु चटच्चटेति दन्तक्रकचलक्ष्य चक्रतुः। स मत्तो मतङ्गजस्त पुरुषं शुण्डेनाप्राप्नुवन् वटमुन्मूलयन्निव वटशाखा जघान। हस्तिना कम्प्यमानेन वटप्ररोहेण स पुरुषो हस्तपादबन्ध कुर्वाणो बाहुयुद्धमिव रचयामास। एतर्हि गजताड्यमानवटशाखामध्यात्तोमराननाः मधुमक्षिका मधुमण्डक विहायोड्डयन्त। ता मक्षिकास्त पुरुष लोहसदृशसदृशैस्तुण्डैः कीकसविश्रान्तैर्जीवाकर्षकैरिव ददशुः। तदोत्पक्षमक्षिकाव्याप्तसर्वाङ्गः स पुरुषः कूपान्निर्गन्तुमुद्यतः कृतपक्ष इवालक्षि। तस्य पुरुषस्य मस्तके मधुबिन्दुर्मधुकोशान्मुहुर्मुहुः सलिलधानीमध्याज्जलबिन्दुरिव निपपात। स मधुबिन्दुर्भालप्रदेशात्तस्य मुखं प्राविशत्, ततः स तं मधुबिन्दुमास्वाद्य महत् सुख मेने।

"हे प्रभव! एतस्य दृष्टान्तस्य साराश शृणु—"अत्र यः पुरुषः स ससारी जीवः। या महाटवी सा चतुरशीतिलक्षयोनिसस्रुतिः। यो गज स मृत्युः। यः कूपः स मनुष्यजन्म। योऽजगरः स नरकः। ये सर्पास्ते क्रोधादयः। यो वटप्ररोहः स तदायुः। यौ कृष्णश्वेतौ मूषकौ तौ मासस्य कृष्णशुक्लौ द्वौ पक्षौ, तौ चायुश्छेदप्रसक्तौ। या मक्षिकास्ताः सांसारिणो व्याधयः। यो मधु-

किन्तु स विषयजन्य क्षणिक सुखम् । इति ज्ञात्वा कश्चतुरस्तत्रानुराग कुर्यात् ? । यदि देवोऽथवा विद्याधरस्त पुरुष कूपादुद्धरेत् तदा देवदूषित· स नेच्छेत् किम् ? ” इति श्रुत्वा प्रभव उवाच–“ महानुभाव ! विपत्समुद्रे निमज्जन् को नाम नेच्छेत् ? नौकायमान परोपकारपरायण नरम् ? । तदा जम्बूरुवाच–“ मित्र ! तदहमपारभवपारावारे समुद्धारके गणधरदेवे सत्यपि किं निमज्जामि ? । प्रभवोऽब्रवीत्–“ भ्रात ! स्वकीयौ स्नेहिनौ पितरावनुरागिणीर्गृहिणीश्च त्व निष्ठुर कथ त्यक्ष्यसि ? । ” ततो जम्बूरमिदधौ–“ अहो ! शत्रुरपि को बन्धुनिर्बन्ध· ? यस्मात् तत्राऽऽसक्तो जनो कुबेरदत्त इव कर्मपाशेन नूनं बध्यते ।

प्रभव प्रति जम्बूकुमारकथिता कुबेरदत्तकथा ।

तथाहि–मथुरानगर्यामेकोत्तमा वेश्याऽभूत् । तस्या· कुबेरसेनेति नाम । सा च कामदेवस्य सेनेवासीत् । सा चैकदा प्रथमगर्भेणा त्यन्त खेदिता सती तदीयजनन्या वैद्यस्य दर्शिता । ‘ यत क्लेशे समुपस्थिते वैद्य शरण भवति । ” वैद्यश्च नाडीपरीक्षया तां नीरोगामक थयत् । पुन क्लेशकारण तदुदरे युग्म सुदुर्वहमुत्पन्नमिति न्यवेदयत् । अपि च प्रसवपर्यन्त तेनैव हेतुना कुबेरसेनाया क्लेशोऽस्तीति प्रोवाच । तन्माता तामुवाच–“ वत्से ! प्राणनाशकेनानेन गर्भेण किं प्रयोजनम् ? तत् ते गर्भमह पातयामि ” ततो मातुर्वच श्रुत्वा कुबेरसेनाऽवदत्–“ मात ! स्वस्ति गर्भाय, अह गर्भदु·ख दु·सहमपि सहिष्ये, यत सूकर्यप्यसकृदनेकसन्ततीर्जनयित्वाऽपि जीवत्येव, तत् कथ नाह जीविष्यामि ? ” । तत सा गर्भक्लेश सहित्वा पूर्णसमये पुत्र पुत्री च जनयामास । ततस्तन्मातोवाच–“ पुत्रि ! एते अपत्ये तव वैरिणी स्त , यतस्त्वमाभ्यां गर्भस्थिताभ्यां मृत्युद्वारे स्थापिताऽसि । पुनरेतद्बालयुगल तव यौवनापहारक भावि । वेश्याश्च यौवनजीवना भवन्तीत्यतस्त्व यौवन जीवमिव रक्ष । हे वत्से ! उदरात् पतितमिद युग्म पुरीषवद् बहिस्त्यज । अत्र मोह मा कार्षी , अस्माकमियमेव

कुलरीतिर्वर्तते । " कुवेरसेनोवाच—" हे मात ! यद्यप्येवं क्रमोऽस्ति तथापि किञ्चिद् विलम्ब्यताम् । दशदिनानि यावदेतौ दारकावहं पोषयामि । एवं मात्रोपदिष्टा सा वेश्या कथञ्चिदपि तौ वालावहर्निशं दुग्धदानेनापोषयत् । एव तौ दारकौ पोषयन्त्यास्तस्या. कालनिशासदृशमेकादशं दिन प्राप्तम् । सा च कुवेरसेना कुवेरदत्त—कुवेरदत्तानामाङ्किते द्वे मुद्रिके कारयित्वा तयोर्दारकयोरङ्गुल्योर्न्यधत्त । ततो बुद्ध्या चतुरा सा दारुपेटा कारयित्वा तां रत्नैरापूर्य तत्र तौ दारकौ स्थापयामास । ततस्ता मञ्जूषा यमुनानदीप्रवाहे स्वय प्रावाहयत् । सा च पेटिका हंसवत् तरन्ती निरुपद्रवं चचाल । ततः कुवेरसेनाऽपि निवृत्त्यापत्ययोर्नयनाञ्जलिभिस्तिलाञ्जलिं ददानेव निजभवनं जगाम ।

ततोऽसौ मञ्जूषा प्रात समये शौर्यनगरद्वारे प्राप्ता । द्वाभ्या श्रेष्ठिपुत्राभ्यां लोचनपथगता सा जगृहे । ता चोद्धाट्य यदा तौ ददृशतुस्तदा तन्मध्ये एकं वालमपरा वालिका चापश्यताम् । तत एक श्रेष्ठिपुत्रो वालं जग्राह, अपरश्च वालिकामग्रहीत् । तौ तयोरङ्गुलिनिहितमुद्रिकाक्षरवाचनेन कुवेरदत्तकुवेरदत्तानामानावित्यज्ञासिष्टाम् । ततस्तयोरिभ्ययोर्गृहे प्रयत्नेन परिपाल्यमानौ तौ स्वाम्यर्पितनिधानवत् ववृधाते । तौ क्रमेणानेककलाविदौ वभूवतुः । क्रमेण कामदेवक्रीडोद्यानमभिनवं यौवन तौ प्रापतु । इमावनुरूपाविति श्रेष्ठिपुत्राभ्या परमहर्षेण तयो परस्पर विवाहोत्सवो व्यधायि । कलाकौशलशिक्षागुरुयौवनालिङ्गितयोस्तयोरङ्गे स्त्रीपुसवाहनोऽनङ्ग आरोहत् ।

एकदा तयोर्वधूवरयो परस्परप्रवर्धमानप्रेमवारिनदी द्यूतक्रीडा प्रावर्तत । तत्र क्वापि प्रस्तावे कुवेरदत्तस्य मुद्रिका सख्या कुवेरदत्ताया. करमध्ये न्यधीयत । कुवेरदत्ता तामूर्मिका परीक्षणीय नाणकमिव पुन. पुन. परित उरिक्षपन्ती ददर्श । कुवेरदत्ता न्यचारयच्चेय मुद्रिकोर्मिकान्तरदर्शनाद् विदेशघटिता प्रतिभाति । ततो भूयोभूयस्तामूर्मिका स्वा च पश्यन्ती सा चिन्तावेशात् स्फुरत्काया मनस्येवं निश्चिकाय । " केनचिद् एकस्मिन् देशे घटिते तुलया समे समानाक्षरनाम्नी च सोदरसदृश्याविमे मुद्रिके स्त· । एकः कुवेरदत्तोऽपराऽहं चेमौ द्वावपि

मुद्रिके इव समानरूपौ भातृभाण्डे, न इत्यत्र सदेहोऽस्ति । आवां समानसर्वाङ्गौ खलु युग्मजातौ, अहो दैवेनेदृशमावां विवाहाकृत्य कारितौ । पित्रा मात्रा वाऽऽवयो समानापत्यवात्सल्येन समाने कर्मिके कारिते । ' यत आवां सौदरौ स्वस्तत एवास्मिन् मम पति बुद्धिरस्य च मयि स्त्रीबुद्धिर्नोत्पद्यते ।" एव विचार्य कुबेरदत्ता तथेति कृतनिश्चया कुबेरदत्तस्य करे तन्मुद्रिकाद्वय चिक्षेप । कुबेरदत्तोऽपि तन्मुद्रिकाद्वय दृष्ट्वा चिन्ताकुलो विमलहृदयः परं विषीदति स्म । तत सुधी कुबेरदत्तस्ता मुद्रिकां कुबेरदत्तायै दत्त्वा मातरमुपेत्य सशपथमपृच्छत्—मात ! औरसादिबहुविधपुत्रेषु कीदृशोऽह ते पुत्रोऽस्मि ? औरसो वा पितृव्यक्त केनचिद्दत्त ? कृत्रिमोऽन्यो वा ? एव कुबेरदत्तस्य परमाग्रहवशान्माता पेटिकामाश्रित आरम्य पूर्वोक्ता सर्वां कथां तस्मै कथयांबभूव । तत कुबेरदत्तो जननीं प्रत्युवाच—" मात ! आवां सौदरौ जानत्याऽपि त्वयाऽकर्तव्य सोदरविवाह किमनुष्ठितम् ? मम सैव माता श्रेष्ठा याऽऽवां परिपालयितुमसमर्था स्वभाग्यमावलीकृत्य नद्यामवाहेऽमुञ्चत् ।। यतो नदीवेगो मरणाय स्यात् न स्वकर्तव्यकर्मकरणाय । तस्मान्मम मरण वरम्, नाकृत्याचरण जीवन वरम् " । ततो मातोवाच—" हे पुत्र ! युवयोरतिमनोहरेण परस्परमनुरूपेण च रूपेण मन्दमतयो वय मोहिता जाता । तवानुरूपा कन्या तां विना न काप्यदृश्यत, न चास्या सदृशस्त्वामृते कोऽपि वर, अत एवैतदकृत्यमप्यस्माभि कृतम् । तथापि न काऽपि क्षति, यतो युवयोर्विवाहातिरिक्त स्त्रीपुरुषसयोगजन्य पापकर्म नाभूत् । अद्यापि त्व कुमार एव, तथैवेयमपि कुमार्येव । अथ तस्यै स्वस्ति भूयात् । ता भातृभाण्डकथा कथयित्वा परित्यज । सौम्य ! व्यापाराय दिग्यात्रा चिकीर्षुस्त्व सकुशल तां सम्पाद्य शीघ्रमागच्छे, इत्यह शुभाशिष ददामि, हे पुत्र ! सकुशल पुनरागतस्य तवापरया कन्यया सार्धं विवाह सोत्सव कारयिष्ये ।

ततो धर्मधी कुबेरदत्तोऽपि मातृवचनमङ्गीकृत्य कुबेरदत्तामुपेत्य त निर्णय निवेदयामासावोचच्च—" हे भद्रे ! त्वं पितृगृह याहि, त्व

भगिन्यसि, विवेकिन्यसि, दक्षासि च, तस्माद् यथोचित कुर्याः। हे भगिनि! आवां पितृभ्यां वञ्चितौ किं कुर्वहे?, अयं तयोर्न दोषः, "यत आवयोरीदृश्येव भवितव्यताऽऽसीत्। यतः पितरोऽपत्य विक्रीणन्ति, मुञ्चन्ति, अकृत्येऽपि योजयन्ति तत्कर्मणामेव दोष.।" तत कुबेरदत्तो भगिनीमेवमुक्त्वा विहाय च क्रयाणकभाण्डमादाय मथुरानगरीं प्रययौ। तत्र स व्यवहारेण पुष्कल धनमुपार्जयत्। यौवनयोग्यं विलास कुर्वाणश्चिरं न्यवसत्। एकदा रूपलावण्यवतीं वेश्या कुबेरसेनां द्रव्य दत्त्वा भार्यां न्यधात्। ततः कतिपये समये व्यतीते कुबेरसेनया सह वैषयिकसुखमनुभवतस्तस्यैकः पुत्रोऽजनि, "ईदृशं दैवनाटकम्।"

ततः कुबेरदत्ताऽपि मातरं गत्वाऽपृच्छत्–"माताऽपि तथैव मञ्जूषाप्राप्तित आरभ्य सर्वां कथां न्यवेदयत्। ततः सा तस्मिन्नेव काले परम वैराग्यमासाद्य प्राव्राजीत्, दुस्तप तपस्तेपे च। प्रव्रजन्ती सा ता मुद्रिका कचित् सगोपयामास। तथा परीषहान् सहमाना स्वप्रवर्तिन्या सह विजहार। प्रवर्तिन्युपदेशमक्लेशं शिरसि निदधानाया अखण्डतपसस्तस्यास्तपस्तरोरवधिज्ञानपुष्पमुत्पेदे। "सैकदा कुबेरदत्तः कथमस्तीति चिन्तयामास! ततः कुबेरसेनासङ्गवशात् सपुत्रं तं ददर्श।" निर्मलहृदयैव शुशोच–"अहो! सम्प्रति मम सहोदरो वराह इवाकृत्यकर्दममग्नस्तिष्ठति। एव विचिन्त्य करुणाजलसारणि सा त प्रतिबोधयितु साध्वीभि. सह मथुरापुरीं विजहार। साऽप्यार्या धर्मलाभपुरस्सरं कुबेरसेनापार्श्वे प्रतिश्रय ययाचे। ततः कुबेरसेना वेश्या कुबेरदत्तामार्यां प्रणम्यैवं विज्ञपया-चकार–"हे आर्ये! यद्यप्यह वेश्याऽस्मि तथापि साम्प्रतमेकपतित्वेन पुनः कुलवधूरिव वर्ते। कुलीनपतिससर्गान्ममैष कुलस्त्रीवेषोऽस्ति। अत कुलीनाचरितेनापि तव प्रसादयोग्याऽहं, तस्मान्मम भवनसमीप उपाश्रयमाश्रित्य सर्वदेष्टा देवता इव सन्निहिता यूयं सर्वाः साध्व्यो भवत। ततस्तस्या. कल्याणकामधेनुरिव सपरिच्छदा कुबेरदत्ताऽऽर्या कुबेरसेनावेश्याऽर्पितोपाश्रये सुखपूर्वकं न्यवसत्। कुबेरसेनाऽपि

मुद्रिके इव समानरूपौ मातृभाण्डे, न इत्यत्र सन्देहोऽस्ति । आवां समानसर्वाङ्गौ खलु युग्मजातौ, अहो दैवेनेदृशमावां विवाहाकृत्यं कारितौ । पित्रा मात्रा वाऽऽवयोः समानापत्यवात्सल्येन समाने ऊर्मिके कारिते । " यत आवां सोदरौ स्वस्तत एवास्मिन् मम पति-बुद्धिरस्य च मयि स्त्रीबुद्धिर्नोत्पद्यते ।" एवं विचार्य कुबेरदत्ता तथेति कृतनिश्चया कुबेरदत्तस्य करे तन्मुद्रिकाद्वयं चिक्षेप । कुबेरदत्तोऽपि तन्मुद्रिकाद्वयं दृष्ट्वा चिन्ताकुलो विमनहृदयः परं विषीदति स्म । ततः सुधीः कुबेरदत्तस्तां मुद्रिकां कुबेरदत्तायै दत्त्वा मातरमुपेत्य सशपथमपृच्छत्—मातः ! औरसादिबहुविधपुत्रेषु कीदृशोऽहं ते पुत्रोऽस्मि ? औरसो वा पितृत्यक्तः केनचिद्दत्तः ? कृत्रिमोऽन्यो वा ? एवं कुबेरदत्तस्य परमाग्रहवशान्माता पेटिकाप्राप्तित आरभ्य पूर्वोक्तां सर्वां कथां तस्मै कथयाम्बभूव । ततः कुबेरदत्तो जननीं प्रत्युवाच—" मातः ! आवां सोदरौ जानत्याऽपि त्वयाऽकर्तव्यं सोदरविवाहं किमनुष्ठितम् ? मम सैव माता श्रेष्ठा याऽऽवां परिपालयितुमसमर्था स्वमसमर्थ्यमावलीकृत्य नदीप्रवाहेऽमुञ्चत् ॥ यतो नदीवेगो मरणाय स्यात्; न स्वकर्तव्यकर्मकरणाय । तस्मान्मम मरणं वरम्, नाकृत्याचरणं जीवनं वरम् " । ततो मातोवाच—" हे पुत्र ! युवयोरतिमनोहरेण परस्परमनुरूपेण च रूपेण मन्दमतयो वयं मोहिता जाताः । तवानुरूपा कन्या तां विना न काप्यदृश्यत, न चास्याः सदृशस्त्वामृते कोऽपि वरः, अत एवैतदकृत्यमप्यस्माभिः कृतम् । तथापि न काऽपि क्षतिः, यतो युवयोर्विवाहातिरिक्तं स्त्रीपुरुषसंयोगजन्यं पापकर्म नाभूत् । अद्यापि त्वं कुमार एव, तथैवेयमपि कुमार्येव । अथ तस्यै स्वस्ति भूयात् । तां मातृभाण्डकथां कथयित्वा परित्यज । सौम्य ! व्यापाराय दिग्यात्रां चिकीर्षुस्त्वं सकुशलं तां सम्पाद्य शीघ्रमागच्छेः, इत्यहं शुभाशिषं ददामि, हे पुत्र ! सकुशलं पुनरागतस्य तवापरया कन्यया सार्धं विवाहोत्सवं कारयिष्ये ।

ततो धर्मधीः कुबेरदत्तोऽपि मातृवचनमङ्गीकृत्य कुबेरदत्तामुपेत्य तं निर्णयं निवेदयामासावोचच्च—" हे भद्रे ! त्वं पितृगृहं याहि, त्वं

भगिन्यसि, विवेकिन्यसि, दक्षासि च, तस्माद् यथोचितं कुर्याः। हे भगिनि! आवां पितृभ्यां वञ्चितौ किं कुर्वहे', अयं तयोर्न दोषः, "यत
आवयोरीदृश्येव भवितव्यताऽऽसीत्। यतः पितरोऽपत्यं विक्रीणन्ति, मुञ्चन्ति, अकृत्येऽपि योजयन्ति तत्कर्मणामेव दोषः।" ततः कुबेरदत्तो
भगिनीमेवमुक्त्वा विहाय च क्रयाणकभाण्डमादाय मथुरानगरीं प्रययौ। तत्र स व्यवहारेण पुष्कलं धनमुपार्जयत्। यौवनयोग्यं विलासं
कुर्वाणश्चिरं न्यवसत्। एकदा रूपलावण्यवतीं वेश्यां कुबेरसेनां द्रव्यं दत्त्वा भार्यां व्यधात्। ततः कतिपये समये व्यतीते कुबेरसेनया
सह वैषयिकसुखमनुभवतस्तस्यैकः पुत्रोऽजनि, "ईदृशं दैवनाटकम्।"

ततः कुबेरदत्ताऽपि मातरं गत्वाऽपृच्छत्–"माताऽपि तथैव मञ्जूषाप्रक्षिप्तिम् आरभ्य सर्वां कथां न्यवेदयत्। ततः सा तस्मिन्नेव
काले परमं वैराग्यमासाद्य प्राव्राजीत्, दुस्तपं तपस्तेपे च। प्रव्रजन्ती सा तां मुद्रिकां क्वचित् सगोपयामास। तथा परीषहान्
सहमाना स्वप्रवर्तिन्या सह विजहार। प्रवर्तिन्युपदेशमक्लेशं शिरसि निदधानाया अखण्डतपसस्तस्यास्तपस्तरोरवधिज्ञानपुष्पमुत्पेदे।
"सैकदा कुबेरदत्तः कथमस्तीति चिन्तयामास! ततः कुबेरसेनासङ्गवशात् सपुत्रं तं ददर्श।" निर्मलहृदयैव शुशोच–"अहो!
सम्प्रति मम सहोदरो वराह इवाकृत्यकर्दममग्नस्तिष्ठति। एवं विचिन्त्य करुणाजलसारणिः सा तं प्रतिबोधयितुं साध्वीभिः सह मथुरापुरीं
विजहार। साऽप्यार्या धर्मलाभपुरस्सरं कुबेरसेनापार्श्वे प्रतिश्रयं ययाचे। ततः कुबेरसेना वेश्या कुबेरदत्तामार्यां प्रणम्यैव विज्ञपयां-
चकार–"हे आर्ये! यद्यप्यहं वेश्याऽस्मि तथापि साम्प्रतमेकपतित्वेन पुनः कुलवधूरिव वर्ते। कुलीनपतिसंसर्गान्ममैष कुलस्त्रीवेषोऽस्ति।
अतः कुलीनाचरितेनापि तव प्रसादयोग्याऽहं, तस्मान्मम भवनसमीप उपाश्रयमाश्रित्य सर्वदेष्टा देवता इव सन्निहिता यूयं सर्वाः साध्व्यो
भवत। ततस्तस्याः कल्याणकामधेनुरिव सपरिच्छदा कुबेरदत्ताऽऽर्या कुबेरसेनावेश्याऽर्पितोपाश्रये सुखपूर्वकं न्यवसत्। कुबेरसेनाऽपि

विवानिश तथाऽऽगत्य निजपुत्रभार्याया कुबेरदत्तायाश्चरणकमलसमीपे भूमौ लुठन्तममुचत्। ततो "यो जन्तुर्यथा बुध्येत स तथैव बोधयेद्" इति न्यायेन साऽऽर्या तां बोधयितुं त बाल वक्ष्यमाणप्रकारेणोल्लापयामास–यथा–"हे बालक! त्वं मम भ्राताऽसि १, पुत्रोऽसि २, पत्युरनुजो देवरोऽसि ३, भ्रातृपुत्रोऽसि ४, पितृव्योऽसि ५, पौत्रोऽसि ६"। "हे दारक! यस्ते पिता स मे सोदर ७, पिता ८ पितामह ९, पति १०, पुत्र ११ श्वशुरश्चास्ति १२"। "हे बालक! या ते माता सा मेऽपि माता १३, पितामही १४, भ्रातृपत्नी १५, वधू १६, श्वश्रू १७, सपत्नी १८ च भवति"।

तत कुबेरदत्ताऽऽर्यायास्तादृश वचन श्रुत्वाऽपृच्छत्–"हे आर्ये! ईदृश परस्परविरुद्धार्थं किं वदसि? एतेनाह विस्मितोऽस्मि।" तत आर्या प्रत्युवाच–"शृणु सर्वं घटयामि–अय बालो मम भ्रातैव भवति–या मे माताऽस्ति, साऽस्यापि, अतो भ्राताऽयम् १। योऽस्य पिताऽस्ति स मे पतिरिति पतिपुत्र पुत्र एव भवतीति ममाय पुत्र २। मम स्वामिनोऽय लघु सोदरोऽस्ति, इति मेऽय देवर ३। मम भ्रातुरय पुत्र इति भ्रातृव्य[ भ्रातृज ]ममु कथयामि ४। अय मम मातुः पत्युर्भ्राता भवति, तस्मादय मे पितृव्य ५। मम सपत्नीपुत्रस्याय पुत्र इति पौत्रोऽप्यय भवति ६। अस्य यः पिता स मे सोदरो भ्राता भवति, एकमातृकत्वात् ७। अस्य य पिता स मन्मातु पतिरिति मातृपतित्वेनास्य बालस्य पिता ममापि पिता सम्पद्यते ८। पितामहश्चैव–बालोऽय मन्मातृपतिसोदरतया पितृव्यो भवति, तस्य पिता पितामह सुतरां सम्पद्यतेऽतोऽस्य पिता मम पितामह ९। अस्य पिता मम पतिरेव भवति–"श्रेष्ठिपुत्रगृहेऽह तेन परिणीताऽस्मि, अत पतिर्भवति स १०। मम बालपिता पुत्र एव घटते–"पतिकी सपत्नी–कुबेरसेना, तस्या पुत्र कुबेरदत्त इति पुत्रोऽपि स भवति ११। देवरोऽय बालस्तस्य कुबेरदत्त पितेति देवरजनकत्वात् कुबेरदत्त श्वशुरोऽपि भवितुमर्हति १२। एव

बालस्यास्य या माता सा ममापि माताऽस्त्येव तदुत्पन्नत्वात् १३ । अस्य बालस्य माता मम पितामही चैवं घटते–" पितृव्योऽयं बाल उक्तस्तस्य माता भवत्यतः पितृव्यमातृत्वात् पितामही सम्पनीपद्यते १४ । भ्रातृपत्नी बालमाताऽनेन प्रकारेण–" मम भ्राता कुबेरदत्त-स्तस्य स्त्रीत्वेन सुतरां भ्रातृजाया भवति " १५ । बालकमाता वधूश्चैव–" सपत्नीपुत्रभार्या यतो भवति एकपतित्वेन कुबेरसेना सपत्नी भवति, तस्याः–पुत्र कुबेरदत्तः, स च मम सपत्नीपुत्रत्वेन हेतुना पुत्रस्तस्य पुन. स्त्री कुबेरसेनेति पुत्रभार्या वधूर्भवत्येव १६ " । बालस्येयं माता मम श्वश्रूरेवं–" मम पत्युः कुबेरदत्तस्य मातेति पतिमातृत्वेन श्वश्रूर्भवति १७ । " बालकमाता सपत्नी ममैवं–" मम पतिः–कुबेरदत्तस्तस्य द्वितीया पत्नीयं जातेति एकपतित्वात् सपत्नी युज्यते १८ इत्यष्टादशसम्बन्धघटना । " कुबेरदत्ताऽऽर्येत्युक्त्वा स्वां मुद्रिकां विश्वासाय कुबेरदत्ताय ददौ । सोऽपि कुबेरदत्तस्तामूर्मिकामवलोक्य कुबेरदत्ताऽऽर्याकथितं सर्वं सम्बन्धं प्रत्यैत् । ततः कुबेरदत्तो विषण्णो भवादुद्विग्न. प्रव्रज्य तपस्तप्त्वा कालधर्मं कृत्वा स्वर्गमगमत् । अथ कुबेरसेना वेश्याऽपि तदा श्राविकात्वं प्रपन्ना । कुबेरदत्ताऽऽर्या च पुनः प्रवर्तिनीसकाशमासादयामास ।

एवं च यो जन्तुः स्वयमपि कर्मणा बध्यते तस्मिन् शत्रुसदृशे परिजने मूर्खाणां शुक्तौ रजतधीरिव बन्धुबुद्धिर्जायते । वस्तुतः स क्षमाश्रमण एव बन्धुर्यः स्वय बन्धुरहितोऽप्यपरेषा बन्धमोक्षको भवति । अन्ये तु नाममात्रेण बन्धवः ।

ततः पुनरपि प्रभवो जम्बूमाह–" हे कुमार ! दुर्गतौ पततो निजान् पितृन् रक्षितुं स्व पुत्र जनय । यतोऽपत्यरहिताः पितरोऽवश्य नरक गच्छन्ति; तस्मादपुत्रस्य तव पितृणामृणात् कथं मुक्तिः स्यात् ? " । ततो जम्बूरुवाच–" हे प्रभव ! अयं ते मोहोऽस्ति यत् पुत्रादेव पितृणा दुर्गतेस्तारणं त्वया प्रतीयते । हे प्रिय ! अस्मिन् विषये महेश्वरदत्तसार्थवाहदृष्टान्तोऽस्ति ।

## प्रभवं प्रति जम्बूकुमारकथिता महेश्वरदत्तकथा ।

तथा हि—प्राक् ताम्रलिप्त्यां नगर्यां श्रीमान् महेश्वरदत्तनामा सार्थपतिरजायत । तस्य समुद्रनाम्ना प्रसिद्धः पिता जलेषु समुद्र इव धनेष्व तृप्तोऽभूत् । तस्यातिमायाविनी बहुलानाम्नी जननी जज्ञे । लोभाकरगर्तोऽर्थोपचयव्यसनी तस्य पिता मृत्वा तस्मिन् देशे महिषो बभूव । पतिवियोगार्तध्यानरता तस्य जननी तस्यैव गृहे शुनी बभूव । महेश्वरस्य पार्वतीव महेश्वरदत्तस्य पत्नी सौभाग्यवती गाङ्गिलानाम्नी जाता । सा च श्वश्रूश्वशुरहीना सती निजगृह एकाकिन्यवसत्, तस्माद् वने हरिणीव सा स्वच्छन्दचारिण्यभूत् । निजनाथं वञ्चयन्ती सा परपुरुषेण रेमे । एकाकिनीनां स्त्रीणां सतीत्वं न चिरं तिष्ठति । यत कामदेव एकाकिनीरेकान्तस्था स्त्रियो दृष्ट्वा निर्भय इव नितान्तं प्रहरति ।

एकदा स्वैरं परनरेण रममाणायां गाङ्गिलायां महेश्वरो हठाद् गृहमकस्मादाययौ । तदा तौ विस्रस्तकेशौ रमणप्रयाससंजातप्रयौ कम्पमानजङ्घौ चकितलोचनौ पुंश्चली–जारौ पराङ्मुखस्य गृहीताधोवस्त्रावगृहीतोपरीयवसनौ नम्रकटपौ स्खलच्चरणौ च दृष्ट्वा कान्दिशीकौ बभूवतुः । महेश्वरश्च लुब्धको मल्लूकमिव केशेषु गृहीत्वा मान्त्रिको भूताविष्टमिव च जारं चपेटाभिस्ताडयामास । तथा कुम्भकारो मृत्तिकापिण्डमिव पादप्रहारैश्च तं मर्दयामास, पुनर्गृहप्रविष्टं कुक्कुरमिव लकुटेन चाताडयत्, किं बहुना ? महेश्वरस्तं जारमर्धप्राणमिव चकार । "मनस्विना हि चौरतोऽप्यधिकः कोपो जारे जायते" । क्रुद्धा तस्य बभ्रुणा इव कुपितेन महेश्वरेणार्धमारितः स जारः कथमपि पलायाञ्चक्रे । किञ्चिद् गत्वा पतितः स गाङ्गिलाजारः कण्ठगतप्राणोऽचिन्तयत्—"धिक् मां यन्मरणप्रदमनार्यकृत्यमहमकार्षम्, तल्लाञ्छितस्य तीर्थमिव मम मरणायाभूद् इदं तद्युक्तमेव ।" एवं चिन्तयन् स जारो विपद्य गाङ्गिलाकुक्षौ स्वाहितवीर्ये शीघ्रमेव पुत्रतां प्राप । ततः पूर्णसमये गाङ्गिला पुत्रमजीजनत् ।

अथ गाङ्गिलापतिर्महेश्वरस्तं जारजातमपि पुत्रं स्वोत्पन्नमिव मन्यमानः प्रेम्णा लालयाबभूव। ततो महेश्वरो जनिततनयाया गाङ्गिलाया आगतमपि व्यभिचारिणीदोषं पुत्रस्नेहाद् व्यस्मरत्। पुत्रीभूतस्य तस्य जारजीवस्य धात्रीकर्माणि कुर्वाणः प्रमोदभाग् महेश्वरो न ललज्जे। वर्धमानं कूर्चकेशाऽऽकर्षकं तं पुत्रं कृपणोऽर्थमिव स हृदयाग्रे सदा दधार च।

एकदा महेश्वरः स्वपितृमरणदिने प्राप्ते तं पितृजीवं महिषं तन्मांसेच्छयाऽक्रैषीत्। ततः पितृमरणतिथिमहेऽतिहर्षरोमाञ्चितो महेश्वरः स्वयं तं महिषमवधीत्। ततस्तन्महिषमांसं भुञ्जानो प्रमोदभाग् महेश्वरः क्रोडस्थाय तस्मै पुत्रायापि तद् ददौ। महेश्वरस्य शुनीभूता माता च तन्मांसलिप्सुस्तत्राऽऽगमत्। सोऽपि मांसखण्डयुतास्थीनि शुनीकृते चिक्षेप। सा शुनी पवनान्दोलितधूमशिखाग्रवन्नृत्यता पुच्छेन स्वपतिजीवकीकसानि जघास। एवं पितृजाङ्गलं भक्षतः समुद्रपुत्रस्य गृहं एको मुनिर्मासक्षपणभिक्षार्थी तत्राऽऽजगाम। स मुनिर्महेश्वरदत्तस्य तादृशं सर्वं वृत्तं ज्ञानप्रकर्षेण व्यजानात्। तज्ज्ञात्वाऽसौ मुनिरचिन्तयत्—"अहो तपस्विनोऽस्याज्ञानं धिक्, यत् पितुर्मांसं भुङ्क्ते, क्रोडे च शत्रुं वहति। इयं शुनी स्वपतेरस्थियुतानि मांसानि प्रमुदितमनाः खादति। "अहो संसार ईदृशोऽस्ति।" एवं सम्यग् ज्ञात्वा मुनिर्महेश्वरगृहान्निर्जगाम। तदा महेश्वरोऽपि धावित्वा तं वन्दित्वा च प्रोवाच—"हे भगवन्! त्वमगृहीतभिक्षो मद्गृहात् किं निवृत्तोऽसि? न ह्यहं भवतोऽभक्तोऽस्मि, तवानादरं न व्यधां, त्वां दृष्ट्वा हर्षुलोऽस्मि च।" ततो मुनिरुवाच—"मांसभक्षकस्य गृहेऽहं न विहरे, तत एव भिक्षां नाऽऽदाम्; मम परमं वैराग्यं चाभूत्।" ततो महेश्वरोऽस्य निदानमपृच्छत्। ततो मुनिरादितो महिषशुन्यादीनां कथां कथयामास। कोऽत्र प्रत्यय इति पृष्टो मुनिरुवाच—इमां शुनीं किमपि प्राग्भूमौ निखातं पृच्छ, तथा पृष्टा शुनी जातिस्वभावतः क्षितिं शय्यार्थमिव पादेन निधानस्थानं चखान। ततो विश्वस्तो महेश्वरो भवोद्विग्नः पात्रेषु धनं दत्त्वा परिव्रज्यामग्रहीत्।

तस्माद् वदतां शिरोमणे ! हे प्रभव ! को निश्चयो यत् दुर्गतिसरसः पुत्राः पितरौ तारयन्ते ? अत्रान्तरे समुद्रश्रीर्जम्बूनामानमुवाच—
" हे नाथ ! त्वं पश्चात्तापं कर्षकवन्मा गाः ।

### जम्बूकुमारं प्रति समुद्रश्रीकथिता कृषीवलकथा ।

तथा हि—पृथ्व्यां प्रसिद्धे सुसीमनि ग्रामे धनधान्यादिसमृद्धो बकनामा कर्षकोऽभूत् । स वर्षासमये कृष्टे क्षेत्रे कङ्गूः कोद्रवां-
श्चावपत् । तस्य क्षेत्रभूमिरभिलोठितकाचेव जातकेशपाशेवोद्भूतश्यामलदलैर्धान्यैरभूत् । प्रवर्धमानं तत्कङ्गुकोद्रववनं दृष्ट्वा मुदितः स कश्चिद्
ग्रामे स्वजनातिथिः स्वग्रामतोऽतिदूरेऽभवत् । तत्र स्वजनैर्भोजने तस्मै गुडमण्डका दत्ताः । स च तेनापूर्वेणाऽऽहारेणात्यन्तं जहर्ष ।
तस्मात्प्रीतो ज्ञातीनपृच्छत्—" अहो युष्माकं जीवितं धन्यं येषां सुधोपमोऽयमाहारो मिलति । मदह स्वप्नेऽपीदृशमाहारं नापश्यम् ।
कङ्गुकोद्रवधान्याशनस्मान् नृपशून् धिक् । ततोऽज्ञातगुडमण्डको ज्ञातीनपृच्छत्—" इमान्याहारवस्तूनि कानि ? कुत्र च जायन्ते ? " ।
ते च तस्मै प्रोचुः—" अरघट्टजलेन सिक्तेषु क्षेत्रेषूत्पद्यन्तेऽन्यधान्यवद् गोधूमाः । यदा गोधूमाः परिपक्वा भवन्ति तदा लूयन्ते विपिष्यन्ते
वह्नितप्ताभ्यां लोहपात्र्यां मण्डकाः पच्यन्ते च । इक्षवोऽपि क्षेत्रे तथैवोप्यन्ते, वृद्धिं गतानां तेषां निपीलनात् प्राप्तेन रसेन पात्रे पाकेन गुडः
समुत्पद्यते । " एवं गुडमण्डकविधानं विज्ञाय स कृषीवलो गृहीतेक्षुगोधूमबीजो निजग्राममाजगाम । ततश्च क्षेत्रे गत्वा फलितं कङ्गुकोद्रव-
मातृशासितो बकनामा कर्षको झटिति लवितुं मारेभे । तदा पुत्रैरपि स प्रोक्तः—" हे पितः ! स्वकुटुम्बजीवातुमिमामर्धपक्वां कृषिं किं
साधारणतृणवल्लुनीषे ? " ततो बकोऽवोचत्—" हे पुत्राः ! एभिः कङ्गुकोद्रवैः किम् ?, अहमत्र क्षेत्रे इक्षुगोधूमान् वप्स्यामि, यतो-
ऽस्माकं खाद्या गुडमण्डकाः सन्ति । " ततः पुत्रा ऊचुः—" हे तात ! स्वल्पैरेव दिनैरिमे कणाः निष्पत्स्यन्ते तान् गृहीत्वा यथारुचि

त्वमिक्षुगोधूमान् वपे. । इय निष्पन्नप्राया कृषिर्नश्यति, गोधूमेक्षुषु तु सम्प्रति सदेहोऽस्ति । क्रोडस्थिते वाले विनश्यति सति उदरस्थिते काऽऽशा ? । " एवं पुत्रैर्निवार्यमाणोऽपि वकस्तत् कङ्गुकोद्रववन लुलाव । यतोऽसौ तत्र प्रभुरासीत् । तत स मूढो वकस्तानि सस्यानि लवित्वा कन्दुकक्रीडायोग्या क्षेत्रेभूमिं चकार । पार्श्वस्थित कूप खानयामास । पर वन्ध्यास्तनदुग्धमिव जल न निरसरत् । तथा स कूपं खान खानं अनिर्विन्नं पातालविलसदृशमकारयत् । परन्तु जलस्य का कथा पङ्कोऽपि न निरगात् । ततश्च तस्य न कङ्गवो न वा कोद्रवा नेक्षवो न च गोधूमा अभवन् । तेन स वक पश्चात्तापमाप । तस्मादैहिक स्त्रीधनसुख त्यजन्नामुष्मिक सशयास्पद सुखमाकाङ्क्षस्त्वं द्वयोज्झितो मा भू. ।

## समुद्रश्रियं प्रति जम्बूकुमारकथिता काककथा ।

ततो महामना जम्बूनामा स्मयमान उवाच–" हे समुद्रश्री ! अह काक इव निर्बुद्धिर्नास्मि । तथाहि–नर्मदानदीतटे विन्ध्यगिरिवने एको यूथपतिर्विन्ध्याद्रेर्युवराज इव महाहस्त्यासीत्, स्वच्छन्द वने विचरन् स गजो यौवनं व्यतीयाय । आयुर्नदीतटमिव वार्द्धकं प्राप । तस्मात् क्षीणवल स वृक्षे दन्ताऽऽघातान् कर्तुमक्षमो ग्रीष्मे शुष्कनिर्झरो गिरिरिव मदरहितो शल्लकीकर्णिकारप्रभृतिवनभङ्गविमुख उच्चान्निम्ने निम्नादुच्चेऽवतारोच्चारासमर्थो दन्तपतनात् स्वल्पभुक् बुभुक्षया क्षामकुक्षिरस्थिभस्त्रासदृशशरीरो वार्द्धकेऽजनि । स गजोऽन्यदा शुष्कपर्वतनद्या समुत्तरन् स्खलितपाद एकं गिरिकूटमिव भुवि पपात । स चोत्थातुमशक्तस्तत्रैव पादोपगमन पालयन्निव तस्थौ । तथास्थितोऽसौ विपेदे । विपन्नस्य तस्यापानमास श्वजम्बूकनकुलादयो बुभुजिरे । तस्य गजस्य सकन्दरपर्वतोपमं विशालापानरन्ध्रशरीर श्वापदैर्निवासीकृतमभूत् । तदीयापानयज्ञशालाया मासार्थिन. काका द्विजा इव विविशुर्निर्जग्मुश्च । तत्रैको वायसो मासभोजनादतृप्त

उत्पन्नविद्रुक्रमिरिवापानमध्य एव तस्थौ । तस्मिन् सारं प्राप्नुवन् स काष्ठमध्ये घुणवदधिकाधिकं मध्ये प्रविवेश । स्वशरीरेण परकाये प्रवेशलीलां कुर्वन् स काको योगीवाभूत् । स गजकायमार्गं स्वच्छन्दं भुञ्जानोऽत्यन्तमध्यगतः पूर्वापरविभागाज्ञो बभूव । तस्य गजस्य मृतकस्य गुदरन्ध्रं रविकरैः पूर्ववत् संचुकोच । तत्र स काकस्तस्य करिणः संकोचितापाने बद्धद्वारे करण्डे सर्प इव तत्रैव तस्थौ, स गजकायो वर्षर्तौ प्रवहन्त्या नद्या तरङ्गकरैर्नर्मदायामनीयत । नर्मदया च नक्राणामुपायनमिव तद्गजशरीरं तरसा वहणमिव समुद्रमध्येऽनीयत । तत्र तस्मिन् प्रविशता जलेन तत्कलेवरमार्द्रीभूतम् । जलेनैव कृतद्वारात् तस्मात् स काको बहिर्निर्जगाम । तस्य गजकायस्यान्तरीपोपमस्योपरिष्ठान्निषद्य स सम्यग् विगक्षण ददर्श । अमतः पार्श्वत पश्चाच्च स जलमयं दृष्ट्वा दध्यौ—" समुड्डीय समुद्रात्तीरं गमिष्यामीति " । स चोड्डीयोड्डीय समुद्रजलस्य प्रान्तं न प्राप, अपि तु तत्कलेवर एवोपविवेश । मीनमकरादिभिराक्रम्यमाणं तत्कलेवरं सागरे भाराऽऽक्रान्ता नौरिव सद्यो ममज्ज । सोऽपि निराधारो वायसः समुद्रे निममज्ज, जलाप्लावनभीत्येव सद्य पञ्चत्वं प्राप ।

तत स्त्रियो मृतगजसदृश्य सन्ति, संसारश्च सागरसदृशोऽस्ति, पुरुषश्च काकतुल्योऽस्ति । गजकायसदृशेषु युष्मासु रागवान् इमस्मिन् भवसागरे न मङ्क्ष्यामि ।

## जम्बूकुमारं प्रति पद्मश्रीकथिता वानरकथा ।

अथ पद्मश्री प्रोवाच—" हे नाथ ! त्वमस्मान् परित्यजन् वानर इवात्यन्तं तापं प्राप्स्यसि । तथाहि—एकस्यामटव्यां परस्परमनुरागिणौ वानरो वानरी चास्ताम् । तौ सदा सहैव निवसन्तावभूताम् । वेलन्धरपर्वताविव तौ मिथो बुभुजाते । युगपदेव तौ वृक्षेषु स्पर्धमानाविवारुरुहतुः । एकरज्ज्वाकृष्टाविव युगपद्धावतुः । एकचित्ताविवानिशं सर्वं कार्यं चक्रतुः । एकदा तौ गङ्गातीरवानीरे रेमाते । तत्र

वानरः प्लवमानोऽनवधानो भुवि पपात। तस्य तीर्थस्य प्रभावात् स वानरो विद्याबलादिवामरकुमारसदृशो मनुष्यो बभूव। वानरं मनुष्यरूप दृष्ट्वा वानरी च मनुष्यदेहेच्छुर्वानरमार्गेण प्राणास्तत्याज। सा वानरी शीघ्र देवीसदृशी नारी बभूव, नारीभूता सा पुनर्नवीनेन स्नेहेन नरभूतं तमालिलिङ्ग। तौ च नरीभूतौ प्राग्जन्मवद्वियुक्तौ निशाचन्द्राविवानिश विलेसतुश्च।

एकदा नरीभूतो वानरो नारीमुवाच—"प्रिये! यथा प्राङ्मर्त्यीभूतावावा तथा देवीभवावोऽद्य"। वानरी प्रोवाच—"स्वामिन्! भूयसाऽसन्तोषेणालम्, मनुष्यरूपावेवावा सर्वान्, विषयानुपभुञ्ज्वहे, देवत्वेन किं? देवत्वादधिक नौ सुखमस्ति, यत एकत्रैव स्वच्छन्दं निर्विघ्न रमावहे। एवं वानर्या वार्यमाणोऽपि स वानरवरो नरस्तत्रैव वानीरादुच्चैर्झम्पा पूर्ववद् ददौ। तत्र नरीभूतस्तिर्यग्, देवीभूतो मानवश्च, यदि पुनः पततः तदा तीर्थप्रभावात् तादृशौ स्याताम्। तस्मात् तत्रैव तीर्थे स पुनरपि झम्पा दत्तवानपि प्राग्जन्मवानरत्वेन भूयोऽपि वानरो बभूव। ततोऽन्येद्युर्भ्रमन्तो राजपुरुषाः पूर्णचन्द्रमुखीं कम्बुकण्ठीं पृथुलस्तनीं कृशोदरीं वरारोहा कमलसदृशहस्तचरणा गङ्गामृत्तिका-विहिततिलकां लताबद्धकेशीं वनकेतकभूषणा तालीदलकुण्डला कण्ठस्थपद्मनालहारा हरिणाक्षीं ता नारीं ददृशुः। ते राजपुरुषास्ता-मादाय राज्ञे समर्पयामासुः, यतो यद्वस्तु स्वामिरहित तिष्ठति तद्राजाधीन भवतीति नीतिरस्ति। राजा च दिव्याकृतिं तामन्त.पुर-शिरोमणिं चकार, यतः सुलक्षणाया आकृते. शोभाऽतिथिता व्रजति खलु। सोऽपि वानरः कैश्चित्तत्राऽऽगतैर्नटैर्गृहीतः पुत्रवद् विविधं नाट्यं शिक्षितश्च। ते नटा एकदा तस्यैव राज्ञः सन्निधौ समुपेत्य त वानरं नर्तयन्तः प्रेक्षणीयकं चक्रुः। वानरश्च राज्ञोऽर्धासनोपविष्टा स्वा प्रिया वानरीं दृष्ट्वाऽश्रुपातैः सात्त्विकाभिनयं प्रकटयन्निवाऽऽसीत्। राज्ञी प्रोवाच—"हे वानर! यः कालो यथा भवति तं तथा सेवस्व, अधुना वञ्जुलपरिभ्रष्ट· पतन मा स्मर" तस्मात् त्वमपि सम्प्राप्त वैषयिक सुख परित्यजन् तद्वानरवत् पश्चात्ताप पश्चान्मा कृथा·।"

इति पद्मश्रीवचनमाकर्ण्य जम्बूरुवाच-" अहं हि विषयेष्वङ्गारकारकवन्न तृप्तोऽस्मि ।

## अङ्गारकारककथा ।

तथाहि-कश्चिदङ्गारकारक एकदोष्णर्तौ महाटवीमगात्, जलतृषाशान्त्यर्थं जलं च बहु स्वपार्श्वे निनाय । अङ्गारान् कुर्वन् सोऽङ्गारिको महताऽग्नितापेन सूर्यतापे च ततस्तृषाकुलितो बभूव । स वराकः शरीरसेचनेन मुहुर्मुहुः पानेन च स्वपार्श्वस्थितं सर्वं जलं वन्यगजवत् व्यापपार । परन्तु सकलेनापि वारिणा तस्य तृषाग्निस्तैलवत्लेपवदपि शशाम । सोऽङ्गारकारको जलं पातुं निपाने यावच्चाल तावन्मार्गे दैवयोगात् कस्यापि मार्गवृक्षस्याधोऽमृततुल्यशीतलच्छायायां स पिपासुर्निपपात । ततश्च शीतलच्छायया प्राप्तशान्तिः स सुखदां स्वल्पां निद्रां लेभे । स्वप्ने स वापीकूपतडागादीन् सर्वाञ्जलाशयान् म त्रप्रयुक्ताऽऽग्नेयबाणवच्छोषयामास, तथाऽप्यच्छिन्नतृष पिपासाकुलो दीन इतस्ततो भ्रमन्नेकं पङ्किलजलं पुराणकूपं ददर्श । तज्जलं चुलुकैर्ग्रहीतुमसमर्थोऽसौ जिह्वया लिहन् दाहज्वरिवत् कथमपि नातृप्यत् ।

हे प्रियतमे ! तस्माज्जीवोऽयं तदङ्गारकसदृशः, देवमन्तरादीनां भोगा वापीकूपतडागादिजलसदृशाः किल सन्ति । यो जीवः स्वर्गादिसुखैर्नातृप्यत् स मानुषैर्भोगैः कथं तृप्येत् ? तस्मात् विषयभोगार्थमाग्रहं न कुरु ।

अथ पद्मसेनोवाच-प्राणिनां परिणामः कर्माधीनस्तस्माद् भोगान् भुङ्क्ष्व, इत्युक्त्याऽलम्, प्रवर्तकनिवर्तका दृष्टान्ता बहवः सन्ति यथा नूपुरपण्डितायाः गोमायोश्च कथा ।

## नूपुरपण्डिताकथा ।

तथाहि-राजगृहे नगरे देवदत्तनामा स्वर्णकारोऽभूत्, तस्य पुत्रो देवदिन्ननामा बभूव । देवदिन्नस्य दुर्गिलानाम्नी भार्याऽभूत् । सा

च चतुरास्वेका सौभाग्यमहानिधिश्चाभवत् । एकदा सा कामबाणै कटाक्षैर्यूना मन· क्षोभयन्ती नद्या जलस्नानार्थं गता । सोज्ज्वलवस्त्रैः सर्वाङ्गस्वर्णभूषणैश्च मूर्ता जलदेवतेव भासमाना नदीतीरमलञ्चकार । कामदेवस्य दुर्गभूमिमिव स्तनद्वयं दर्शयन्ती सा पृथुलस्तनी कञ्चुकं शनैः शरीरादुत्तारयामास । सा कञ्चुक चोत्तरीय च सख्या· समर्प्य वस्त्रार्धेन कुचौ गोपयामास । निपुणसखीजनालापैर्विदग्धा सा जीवितकामदेवा मरालीव मन्द मन्द तटात्तट विवेश । ता नदीं दूरादप्युत्क्षिप्तैस्तरङ्गहस्तैश्चिराद्दृष्टा सखीमिव सर्वाङ्गे समालिलिङ्ग । सा चकितहरिणाक्षी जलेन रिरंसुररित्रदण्डाभ्या नौरिव कराभ्या जलमदारयत् । कुतूहलात् तस्याश्चिरं स्नान्त्या जलं विकिरन्त्याश्चलो करौ नृत्यत्कमलविभ्रमौ रेजाते । सा श्लथैकवस्त्रा विलुलितकेशपाशा धवलदन्तावलीका जलक्रीडापरा रतोत्थितेवालक्ष्यत ।

समुद्रे सुरीमिव नद्या रममाणाया ता पर्यटन् दु शील कोऽपि युवा नागरिको ददर्श । जलार्द्रसूक्ष्मैकवस्त्राच्छादितामपि सुदर्श-सर्वावयवा ता दृष्ट्वा स नागरयुवा क्षोभादिद पपाठ–"सुस्नातमिति नदी ते पृच्छति, अमी वृक्षाश्च पृच्छन्ति, त्वत्पादकमलयोर्निपतन्नहमपि पृच्छामि"। साऽप्यपाठीत्–"नद्यै स्वस्त्यस्तु, वृक्षाश्च चिरं नन्दन्तु, सुस्नातपृच्छकाना समीहितमहं करिष्यामि। स युवा मनोरथवृक्षो-द्भवेऽमृतसेकोपम तस्या वचन श्रुत्वा नृपाज्ञयाऽवरुद्ध इव तथैवाऽस्थात् । स केयमिति चिन्तयन्नेकस्य वृक्षस्याध उच्चैर्मुखान् फलपाताभि-काङ्क्षिणो बालानपश्यत् । ततः स युवा लोष्टैस्तरुशाखा· प्रताडयन् फलानि त्रटत्रटेति भूतले पातयामास । स यथेष्टं तत्फललाभ हृष्टान् बालानपृच्छत्–" हे बाला ! नद्यामस्या स्नानकर्त्री केयमस्ति ? अस्याश्च नार्या· क्व गृहम् ? " ते बालाः कथयामासुः–" इयं स्वर्ण-कारस्य देवदत्तनाम्न· स्नुषा वर्तते, अस्यागृहमितोऽतिनिकटे वर्तते, दुर्गिलाऽप्येकचेतसा तं युवान ध्यायन् स्नानक्रीडा विहाय तत्क्षणे स्वगृह ययौ ।

कस्यां निशि कस्मिन् दिने क देशे क क्षणे आवां मिलिष्याव इति तौ दिवानिशं चिन्तयामासतुः । वियोगपीडितौ तौ युवानौ परस्परसङ्गमकाङ्क्षिणौ चक्रवाकाविव चिरमनुरागिणाववतिष्ठताम् । अन्येद्युः स युवैकां तापसीं पुंश्चलीकुलदेवतां भोजनद्रव्यादिभिः परितोष्य प्रार्थयामास—" हे तापसि ! त्वं देवदत्तस्नुषाया मम च परस्परानुरक्तयोः साक्षान्नियतिरेवतेव शीघ्रं सङ्गमं कारय । हे तापसि ! मया स्वयं दूतीभूय सा सुन्दरी भाषिता, मम सङ्गमं सा स्वीकृतवत्यस्ति, अतस्त्वत्र सम्प्रति तत्सङ्गमं सुसाध्योऽस्ति । सा धीमती तापसी तद्वचनं स्वीकृत्य सद्यो देवदत्तस्य गृहं भिक्षाव्याजेन ययौ । स्थालीपरिष्कारे कृतव्यापारां स्वर्णकारवधूं सा परिव्राजिकाऽद्राक्षीत् तामिदं प्रोवाच— " हे वधु ! त्वामेको युवा मूर्तकामदेवो रिरंसुर्मन्मुखेन त्वां प्रार्थयते । हे विशालाक्षि ! मामुदासीनां मा कृथाः, मत्प्रार्थितं सफलीकुरु । रूपेण वयसा बुद्ध्या चातुर्यादिगुणैश्च स्वानुरूपं तं युवानमासाद्य यौवनं कृतार्थय । हे वधु ! यदवधि त्वामसौ नद्यां स्नान्तीमपश्यत् तदवधि त्वद्गुणोद्गानवातूलोऽन्यस्त्रीणामपि न जानाति "। धीमती दुर्गिलाऽपि निजहृदयभावं गोप्तुं तां तापसीमेव परुषाक्षरपूर्वकमतर्जयत्—" हे मुण्डे ! त्वं किं मद्यं पीतवत्यसि ? यदेवं प्रलपसि, किं कुलीनेषु जनेष्वकुलीनां कुट्टिन्यसि ?, आस्तां मम नेत्रयोरग्रं त्यज, लुब्धदर्शना भव तव दर्शनेनापि पापं, भाषणेन का कथा ? " एवं निर्भर्त्सितायाः गच्छन्त्यास्तापस्याः पृष्ठे दुर्गिला सोपकुल्य इव मषीमलिनकरं ददौ । तदाशयमजानाना सा विलक्षा तपस्विनी दुःशीलपुरुषं गत्वा परुषाक्षरैरुवाच—" हे दुःशीलपुरुष ! त्वं मां मिथ्यैवमवादीर्यन्मय्यनुरागिणी साऽस्ति ।" सा हि विशालसतीगर्वा मां शुनीमिवातर्जयत् । हे मुग्ध ! मम दूत्यं तस्यां कुलाङ्गनायां व्यर्थमभूत्, यत सुभित्तौ चित्ररचना चतुरस्य शोभते । गृहकर्मव्यग्रया कुपितया तया मषीमलिनकरेण चपेटया पृष्ठेऽहमाहताऽस्मि " इत्युक्त्वा सा तापसी दुर्गिलादत्तमषीमलिनकराङ्कितं स्वपृष्ठं धूर्तवरायादर्शयत् । तदा स एवं व्यचारयत्—" कृष्णपञ्चम्यां ध्रुवं सा

सङ्केतमदात्, यदस्या पृष्ठे पञ्चाङ्गुलिर्मषीदिग्धो न्यस्तः, अहो तस्याश्चातुरी काऽप्यपूर्वा या सङ्केतवासरं सूचयति । हे मनो ! ऽनया भङ्ग्याऽऽश्वसिहि, अहो सा सङ्केतस्थानं तु केनापि हेतुना न सूचयाञ्चक्रे । तदद्यापि तत्सङ्गमे विघ्नो वर्तते । पुनश्च स तापसीमुवाच— “ हे तापसि ! तस्या आशयं त्वं न जानासि । सा मय्यनुरागिण्येवातो भूयोऽपि तां प्रार्थय । हे मातः ! मत्प्रयोजने सर्वथाऽनुत्साहं मा कृथाः । भूयोऽपि त्वं गच्छ । यत उत्साहो लक्ष्मीलताया आदिमं मूलमस्ति ” । साऽपि जगाद—‘ सा कुलीना तव नामापि न सहते । स्थले जलारोपणमिव तवेप्सितं दुष्करं प्रतिभाति । त्वदर्थसिद्धिस्तु सन्दिग्धा, मम भर्त्सनं तु निःसंदिग्धमेव । तथापि ह्यनाशां त्यक्त्वा शीघ्रं यास्यामि ” इत्युक्त्वा तापसी पुनरपि दुर्गिलां गत्वाऽमृतद्रवसदृशैर्वचनैरुवाच—“ हे दुर्गिले ! रूपेणाऽऽत्मानुरूपं तं युवानं प्राप्य तेन रमस्व । यौवनफलं गृहाण । यतो यौवनस्येदं फलमस्ति ” दुर्गिला तां तापसीं भर्त्सनापूर्वकं गले धृत्वा रुष्टेवाशोकवनिका-प्रत्यग्द्वारेण निःसारयामास । सा तापसी लज्जावशाद्भ्रष्टोत्तरीया गोपितमुखी खेदभाग् द्रुतं गत्वा तस्य पुंसो दुर्गिलावृत्तं कथयामास “ हे पुत्र ! अहं तया प्राग्वद् भर्त्सिता गले धृता पश्चाद्द्वाराऽशोकवनान्तरान्निःसारिताऽस्मि । ततो धीमान् स पुनरेवं दध्यौ—“ अशोक-वनिकान्तरे त्वमागच्छेरिति सङ्केतस्तया दत्तो मम ” । तामुवाच—“ हे तापसि ! तया भर्त्सना कृता सा सोढव्या । अतः परं सा दुष्टा त्वया न किमपि वाच्या ” । ततः स युवा कृष्णपञ्चम्यां सायंकालेऽशोकवनिकान्तरे पश्चिमद्वारेण जगाम । स युवा मार्गं पश्यन्तीं तामपश्यत्, साऽपि तमद्राक्षीत् । तयोर्विवाहवदस्खलितस्तागमेलकोऽभूत् । नयने इव परस्परं बाहू प्रसारयन्तौ तौ द्वौ रोमाञ्चोत्फुल्ल-सर्वाङ्गावभवताम् । तौ प्रागप्येकचित्तौ तदा त्वेकीभवत्कायौ समुद्रनद्याविव दृढतरमालिलिङ्गतुः । प्रेमगर्भाभिर्वार्ताभिर्नवनवैः रतैः संभोगसमुद्रनिमग्नौ तौ रात्रेर्यामद्वयमतिनिन्यतुः । रताऽऽयासशालिनोर्भुजगण्डोपधानयोस्तयोर्नयनकमलनिशा निद्रा सञ्चक्राम ।

इतश्च देवदत्तनामा स्वर्णकारः कायचिन्तार्थमुत्थितोऽशोकवनिकां ययौ । तौ शयानौ दृष्ट्वाऽचिन्तयच्च—" इयं मम स्नुषा पापीयसी तां धिक् यदियं परपुंसा सह रतश्रान्ता नितान्तं स्वपिति " । स वृद्धो जारश्चायमिति निश्चेतुं गृहं गत्वा सुप्तं पुत्रं दृष्ट्वेति व्यचारयत्— " एतस्याश्चरणनूपुरमाकर्षामि शनैः, यथा मे पुत्रो विश्वसिति यदियं स्नुषाऽसती विद्यते " इति ध्यात्वा चौर इव सशस्तत्पादनूपुरं शनैराकृष्य देवदत्तस्तेनैव मार्गेण स्वगृहमाययौ । सा स्वर्णकारस्नुषा पादनूपुराऽऽकर्षणेनाजागरीत् । प्रायः सभयसुप्तानां निद्रा स्वल्पैव भयादिव भवति । साऽपि श्वशुरेणाऽऽकृष्टं पादनूपुरं ज्ञात्वा जारपुरुषमुत्थाप्य भयव्यग्रा जगाद—" शीघ्रं पलायस्व, यतः आवां दुरात्मना श्वशुरेण दृष्टौ स्वः, ममानर्थे समागते सहायतार्थं त्वं यतेथाः " स जारः आमित्युक्त्वाऽर्धसंवीतवस्त्रो भयात् पलायाञ्चक्रे । पुंश्चल्यपि सा शीघ्रं गृहे गत्वा भर्तृपार्श्वेऽशेत। सा धूर्ततां नाटयन्ती बुद्धिमतीनां धुरन्धरा गाढाऽऽलिङ्गनपूर्वकं स्वपतिं प्रबोधयाञ्चकार पतिं चोवाच सा—" हे नाथ ! इह मां घर्मो बाधते, तत्पवनान्दोलितपल्लवामशोकवनिकामितश्चल । " स देवदिन्नोऽपि स्त्रीप्रधानः उत्थाय सरलत्वादशोकवनिकां गत्वा कण्ठलग्नया दुर्गिलया सह जारस्थानेऽशेत । साऽपि तत्रैव निर्भरमालिङ्ग्याशेत । तत्पतिस्तत्रापि सरलाशयो निद्रां प्राप, यतोऽक्षुद्रमनसां निद्रा सुलभैव भवति । अथ सा धूर्ता नटीव गोपिताऽऽकारा पतिमुवाच—" हे नाथ ! त्वत्कुले कोऽप्यनाचारो, यो वक्तुमपि न शक्यते । त्वामालिङ्ग्य प्रसुप्ताया आवरणरहितवक्षसो मे पादात् तव तातो नूपुरमाकृष्याग्रहीत् । पूज्यानां वध्वाः स्पर्शोऽपि नोचितः, रतवेश्मनि पत्या सह प्रसुप्तायास्तस्याः का कथा ! "। " हे मनस्विनि ! प्रातरहं सोपालम्भं पितरं वक्ष्यामि त्वत्समक्षे " इति दुर्गिलां देवदिन्न आश्वासयामास । दुर्गिलोवाच—" अधुनैव त्वं पितरं कथयितुमर्हसि, अन्यथा प्रातर्मां परपुरुषेण शयितां कथयिष्यति । सोऽप्युवाच—' मम सुप्तस्य वध्वाः पादनूपुरमहार्षीदित्यहं पितरमाक्षिप्य वक्ष्यामि । तव पक्षेऽस्मि, किल त्वं

निश्चिन्ता भव ”। हे नाथ ! यथाऽधुना त्वं वदसि तथा प्रातरपि कथयेः ” सा धूर्तेति स्वपतिं बहून्छपथान् कारयामास ।

ततः प्रभाते देवदिन्नः कुपितः स्वपितरं जगाद—“ त्वं किं मम स्त्रियाः पादनूपुरमकर्षः । ” स वृद्ध उवाच—“ हे पुत्र ! इयं वधूः दुःशीलाऽस्ति मयाऽशोकवने रात्रौ परपुरुषेण शयिता निरैक्षि, इय दुःशीलेति तव विश्वासार्थमस्याः पादान्नूपुरमाकर्षम् , ” तदा पुत्र उवाच—“ हे पित ! स्तत्राहं सुप्तोऽपरः कोऽपि पुरुषो न शयितोऽभूत् । निर्लज्जेन त्वया किमीदृशं लज्जितोऽस्मि । वध्वा नूपुरमर्पय त्वं न विगोपय तत् , मयि सुप्ते तत्त्वयाऽऽकृष्ट ममेयं स्त्री प्रकृष्टा सती वर्तते खलु । ” स्थविर उवाच—“ यदाऽहमस्या नूपुरमाकर्षं तदा गृहमागत्य त्वामपश्यम् , त्वं गृहे शयित आसी किल । ” ततो दुर्गिलोवाच—“ अहं स्वस्य दोषाऽऽरोपणं न सहे, दैवीं क्रिया कृत्वा पितरं प्रत्याययिष्यामि । मम कुलीनाया ईदृशं दोषाऽऽरोपणं वाङ्मात्रमपि न शोभते यथा धौतधवलवस्त्रे मषीबिन्दुः । इह शोभनयक्षस्य जङ्घाभ्यन्तरे निःसराम्यहम् , यत्तज्जङ्घयोर्मध्येऽशुद्धो न गन्तुं शक्नोति ।

अथ सविकल्पेन पित्रा निर्विकल्पेन पुत्रेण प्रागल्भ्यमहानिधेस्तस्याः प्रतिज्ञा स्वीचक्रे । सा स्नात्वा धौतवस्त्रधरा धूपपुष्पोपहारपाणिः सर्वबन्धुसमक्ष यक्ष पूजयितुं जगाम । सङ्केतितः स जारः यक्षमर्चयन्त्यास्तस्याः कण्ठदेशे कवर्गवद् ग्रहिलीभूयालगत् । जनैः स ग्रहिल इति गले धृत्वा दूरेऽपास्यत । सा पुनः स्नात्वा यक्षमर्चित्वैवं व्यजिज्ञपत्—“ चेन्मया पतिं विना मत्कण्ठे प्रत्यक्षममुं ग्रहिलं च विना कदापि नान्यः पुमानस्पर्शि तदा मे शुद्धिदो भूयाः, यतः सत्याः सत्यप्रियोऽसि ” किं करोमीति चिन्तया यावद्यक्षोऽप्याविष्टस्तावत् तज्जङ्घयोर्मध्ये साऽविलम्बेन निर्जगाम । शुद्धा शुद्धेति तुमुलकारिणि जने तस्या गले राजाध्यक्षाः पुष्पमाल्यं निचिक्षिपुः । वाद्यमानेन तुर्येण प्रमुदितबन्धुभिर्वृता सा देवदिन्नेन स्वीकृता श्वशुरगृहं ययौ । स्वक नूपुराकर्षणजनित कलङ्कमुदतारयत् , तत्प्रभृति जनैर्नूपुरपण्डिताऽकथ्यत ।

" स्नुषया मया पराजितो देवदत्तस्तत्प्रभृति चिन्तया नष्टनिद्रो वारिबद्धगज इवाभवत् । राजा त योगिनमिवानिद्र ज्ञात्वा यथा प्रार्थितां जीविकां दत्त्वा शुद्धान्तरक्षक चकार । कस्याचिन्निश्येका राज्ञी तमन्त पुररक्षक शेते नवेति ज्ञातु पुन पुनरपश्यत्। सोऽचिन्तयत्— " किमपि कारण मया न ज्ञायते यदुत्थाय मामेषा पुन पुनर्निरीक्षते " । मयि सुप्ते किमियं कुर्यादिति ज्ञातु स यामिक कपटनिद्रया शिश्ये । शनैश्चौरवद् गवाक्षाभिमुख गन्तुमारेभे तस्य गवाक्षस्याधो देवराजगजसोदरो राजप्रिय सदामदो हस्ती निबद्ध आसीत् । सा तस्य गजस्य हस्तिपके नित्यानुरागिणी गवाक्षत सद्वारिदारुफलकमपसार्य बहिर्ययौ । नित्याभ्यासात् सुशिक्षितो गज शुण्डेन तामादाय भूमौ मुमोच । ततस्तां दृष्ट्वा हस्तिपकोऽकुप्यत् । पुन सोऽतिकाले किमायासीरित्युक्त्वाऽनेकशो हस्तिशृङ्खलया दासीमिव तां जघान । सोवाच—" हे हस्तिपक ! मा मा ताडय, अद्य राज्ञा युक्त कोऽपि नवोऽन्त पुररक्षको जागरूक सन् मामवारुधत् । हे सुन्दर ! अह कथमपि तस्य निद्राच्छिद्र प्राप्याऽऽगताऽस्मि—" इति विज्ञाय मा कोपी ," इत्थ तया बोधितो हस्तिपक कोप त्यक्त्वा तया सह यथा रुचि रेमे । रात्रे पश्चिमे भागे साहसमहानिधि सा हस्तिना शुण्डमारोप्योदक्षिता स्वाऽऽवासं ययौ । स्वर्णकारोऽपि दध्यौ—' अहो स्त्रियां चरितं घोटकानां कुहकारावमिव को ज्ञातुमर्हति ' । अहो यद्यसूर्यम्पश्यानामपि राजयोषितामेव शीलभङ्गो भवति तर्ह्यन्यस्त्रीषु का कथा !, सामान्यगृहस्त्रीणां जलाहरणार्थं सञ्चरन्तीनां शीलरक्षण कियच्चिरं भवितुमर्हति ' " इति स्वस्नुषाया दौःशील्यकोपचिन्तां त्यक्त्वा शोचितर्णोऽधमर्ण इव तत्र निर्भरं सुष्वाप । स स्थविर स्वर्णकार प्रातरपि न जागराञ्चक्रे । ततो भृत्यास्तु यथातथ राज्ञेऽकथयत् । राजाऽपि प्रोवाच—" केनापि कारणेनात्र भवितव्यम् तस्मादसौ यदा जागृयात्तदा त मत्पार्श्वे समानयत । " इत्यादिष्टा भृत्या ययु । स्वर्णकारोऽपि चिरात् सप्तरात्रं निद्रासुखमन्वभूत् । सप्तरात्रे व्यतीते सोऽजागरीद् भृत्यैश्च स राजसमीप नीत । राज्ञैवमपृच्छयत—

" हे स्थविर ! तव तु निद्रा कदापि नाऽऽगमत् यथा दुर्भगस्य कामिनी नैति तथा, तत् किं सप्तरात्रं त्वं सुप्त :, तव न किमपि भयं यथार्थं ब्रूहि, सोऽपि हस्तिपकस्य राज्या गजस्य च रात्रिवृत्तान्तं यथादृष्टं राज्ञेऽचकथत् । ततो राजा प्रसादं दत्त्वा स विसृष्टो निजगृहं ययौ । ततो जीर्णदु स सुखपूर्वकमतिष्ठत्, यतो जनो धैर्यं जनात् प्राप्नोति । ततो राज्ञा तां दुश्चारिणीं ज्ञातुं काष्ठहस्तिनं कारयित्वा सर्वा राज्ञीराजापयत्. मया स्वप्नो दृष्टो यत् कैलशोऽयं मत्तङ्गज· स भवतीभिर्ममाग्रे विवस्त्राभिरारोढव्य· । ता राज्यो राज्ञ· पश्यतस्तथा चक्रिरे । पर चैका राज्ञी त्वेवमुवाच-" हे नाथ ! अहमस्माद् गजाद् बिभेमि " । ततो राजा कुपित तां राज्ञीं लीलाकमलनालेनाताडयत् । सा मूर्च्छानाटितकं कृत्वा भूमावपतत् । नृपोऽप्येवं दध्यौ-या स्थविरेणोक्ता सेयं कुलपांसिनी पापीयसी दुश्चारिणी मम राज्ञी वर्तते। तत्पृष्ठं निरूपयञ्छृङ्खलाघातदर्शनात् स्मयमानो नखाच्छोटनिकापूर्वकमिदमुवाच स राजा-" हे दुश्चरिते ! त्वं गजेन क्रीडसि, अस्माद् दारुहस्तिनो बिभेषि, पुनस्त्वं शृङ्खलाघातान्मोदसे कमलघातान्मूर्च्छसि च । राजा प्रदीप्तकोपप्राग्भारो वैभारगिरौ गत्वा तं हस्तिपकं हस्त्यारूढमाजूहवत् । ततस्तेन सह तां राज्ञीं गजासने समारोपयत् । उग्रशासनो राजा तं हस्तिपकाधमं समादिशत्-" गजं विषमगिरिप्रदेशारूढं कृत्वा निपातये, तेन युवयोर्निग्रहो भवतु ।

आधोरणस्तं हस्तिनं पर्वतशिखरे त्रिपदोत्क्षिप्तैकपाद स्थिर धारयामास । तदा जनो हाहाकुर्वन्नुवाच-" राजशिरोमणे ! आज्ञाकारिण· पशोर्गजेन्द्रस्य मारणं नोचितं भवति " । अनाकर्णितकं कृत्वा पातयेत्येवोपदिशति राज्ञि हस्तिपको गजं द्वाभ्यां पद्भ्यामधारयत् । पुनर्लोकै " हाहाऽयं गजो न हन्तव्य " इति वदति सति राजा तूष्णीकोऽभूत् । हस्तिपकश्च तं गजमेकपादस्थं दधौ । लोको हस्तिरत्नस्य मारणं द्रष्टुमसमर्थो हाहाकुर्वन्नुच्चैस्थितैर्भुजै राजानमुवाच-" हे क्षितिवल्लभ ! अयमन्यगजासह सुशिक्षितो दक्षिणावर्तवद्

दुष्प्रापो यत्नीयोऽस्ति, " राजन् ! त्वं प्रभुरसि तस्मादपराधिनोर्यदिच्छसि तत् करोषि, परन्त्वविवेकजमयशस्तव निरङ्कुशं स्यादिति विद्धि । हे स्वामिन् ! त्वया स्वयं कार्याकार्ये विचार्ये, तत् स्वयं विचार्य हस्तिरत्नं रक्ष न प्रसीद । राजाऽप्युवाच–" अस्त्वेवम् यूयं सर्वे मद्वचसेमं हस्तिपकं हस्तिरक्षणाय वदत " । ततो लोका ऊचुः –" हे आधोरणशिरोमणे ! इयतीं भूमिकां प्रापितं गजं निवर्तयितुं त्वं शक्नोषि ? " स उवाच–" यदि राजाऽऽवयोरभयं ददाति तदा सुखेनोत्तारयामि " । तदा राजलोकैर्विज्ञप्तः–" हे राजन् ! अनयोरभयं देहि ! ततो हस्तिपकः शनैस्तं गजमुदतारयत् । ततो गजस्कन्धाद् राज्ञी-हस्तिपकावुत्तीर्णौ । मद्देशस्त्यज्यतामित्युक्तौ तौ पलायाञ्चक्राते ।

तौ नश्यन्तौ सायंकाले एकं ग्रामं जग्मतुः । तत्रैकस्मिञ्छून्ये देवालये सहैव सुषुपतुः । एकश्चौरो ग्रामादर्धरात्रे तदारक्षकेभ्यो नष्ट्वा तद्देवकुले प्राविशत् । तद्देवकुलं ग्रामारक्षकाः प्रातर्वयं चौरं ग्रहीष्याम इति वदन्तः पर्यवेष्टयन् । चौरोऽप्यन्धवत् कराभ्यां देवकुलं शोधयन् यत्र तौ शयानौ बभूवतुस्तत्र शनैर्ययौ । तस्करेण स्पृश्यमानोऽपि न हस्तिपकोऽजागरीत्, यतः श्रान्तस्य निद्रा वज्रलेपवत् सज्यते । परं चेषत्करस्पृष्टाऽपि राज्ञी शीघ्रमजागरीत् । तस्मिंश्चौरे स्पर्शमात्रादनुरागिणी भूता सा त्वं कोऽसीत्युवाच च शनैः । सोऽपि तस्करः शनैरित्युवाच–" अहं चौरोऽस्मि " अहं धावत्सु ग्रामरक्षकेषु प्राणत्राणार्थमत्र प्राविशम् । सानुरागा सतीश्रुवा सा चौरमब्रवीत्– " हे सुभग ! यदि मामिच्छसि तदा त्वं रक्षामि नात्र संशयः । " चौर उवाच– ' हे वरवर्णिनि ! मया कनकं सुगन्धश्च प्राप्तौ यतो मम पत्नी भवसि जीवितं च रक्षसि । परं कोऽत्र प्रकारो येन मां रक्षसि तत् कथयित्वा हे धीमति ! मामाश्वासय । " सा प्रोवाच– " हे सुभग ! ग्रामरक्षकेष्वागतेषु त्वां पतिं वक्ष्यामि " सोऽब्रवीत्–" एवमस्त्विति " । तदा प्रातःकाले शस्त्रपाणिभिः प्रविष्टैर्भूभङ्गभीषणै र्ग्रामसुभटैस्तयोऽपि पृष्टा –" युष्मासु कश्चौर इति " । ततः सा धूर्ता मूर्तमायेव तान् ग्रामपुरुषानुवाच " चौरपुरुषमुद्दिश्याऽयं मे पतिः

रिति " सा कृताञ्जलिः पुनरुवाच–" हे भ्रातर ! आवां ग्रामान्तरे गच्छन्तौ दिनापगमेऽत्र देवालये न्यवात्स्व "। ते ग्रामीणाः सम्भूय पर्यालोच्यैवमूचु –" चौरस्य गृह ईदृश स्त्रीरत्न न सभाव्यते। इयं ब्राह्मणी वाणिजी राजकन्या वा काऽप्यन्या भवेत्। इय मूर्त्याऽपि पवित्रा, अस्या पतिश्चौरो न भवेत्। इय विचित्रवस्त्रभूषणा लक्ष्मीरिव वपुष्मती, यस्येयं स्त्री स चौर्येण न जीवितुमर्हति। पारिशेष्याद् हस्तिपकमेव दोषिण मत्वा सद्यः शूलाया समारोपयाञ्चक्रु। शूलाधिरोपित स हस्तिपको मार्गे यं य ददर्श त त मा जल पायय पाययेति प्रार्थयामास। त राजभीत्या कोऽपि जल नापाययत्। यत सर्वोऽपि स्वरक्षापूर्वक धर्ममाचरति। तदा तेन मार्गेण गच्छन् जिनदासाख्यः श्रावकस्तेन चौरेण दृष्टो जल याचितश्च। सोऽपि त प्रत्येवमुवाच–" हे चौर ! तव पिपासामह हरिष्यामि यदि मद्वच करिष्यसि "। तावत् त्व ' नमोऽर्हद्भ्य इति वदे यावदह जलमानयामि। जलपिपासया स हस्तिपकस्तथा घोषयितु प्रारेभे। तत स श्रावकोऽपि तत् पिपासाशान्त्यर्थं राजपुरुषाऽऽज्ञया जलमानयत्। स हस्तिपक आनीयमानं जल दृष्ट्वा नमोऽर्हद्भ्य इति समुच्चरन् प्राणैरमुच्यत। स त्वसंश्रुतशीलोऽपि शीलिताकामनिर्जरो नमस्कारप्रभावेण व्यन्तरदेवोऽभूत्।

साऽपि पुश्चली चौरेण सह मार्गे प्रययौ। मार्गे एका नदी जलपूरेण दुस्तरा प्राप। चौरोऽपि पुश्चलीं प्रत्युवाच–' त्वामहमेक-समयेनोत्तारयितुं न शक्नोमि यतस्ते वस्त्राभरणभारोऽस्ति। हे प्रिये ! प्रथम त्व वस्त्राभरणभार मह्यं समर्पय। तं प्राग् नदीपार नेष्यामि, ततस्त्वामप्यनायासेन पार नेष्यामि। यावदहमायामि तावत् त्वं शरस्तम्बे तिरोभव, एकाकिन्यपि मा भैषीरहं शीघ्रमेष्यामि, तदा त्वा पृष्ठदेश आरोप्य जले तरन् पोत इव परस्मिंस्तटे नेष्यामि। त्व मद्वचनं कुरु " शरस्तम्बे प्रविश्य सा पुश्चल्यपि तथा चकार। स चौरो वस्त्राभरणानि नीत्वा परं तट गत्वेत्यचिन्तयत्–" येय पतिं मारयामास सा मय्यनुरक्ता क्षणरागा हरिद्रेव ममाप्यसौ विपदेऽवश्य स्यात्,

इति वस्त्राभरणानि गृहीत्वा स तस्करो वल्कधरः पश्यन्नपि हरिणवन्ननाश । उद्धृतकरा हस्तिनीव सद्योजातेव नग्ना सा गच्छन्तं तमालोक्योवाच—“ हे प्रिय ! मां विहाय किं यासि ? ” । चौरोऽवदत्—“ त्वामेकाकिनीं शरवणस्थितां राक्षसीमिव दृष्ट्वा बिभेमि, अतस्त्वयाऽलम् ” एव वदन् स पक्षीवोड्डीयानश्यत् । सा पुंश्चली पतिद्वेषिणी तत्रैवोपविश्य तस्थौ ।

स हस्तिपकजीवोऽपि देवत्व प्राप्त प्रयुक्तावधिज्ञानस्तां तपस्विनीं तथास्थितामपश्यत् । तत स तां पूर्वज मत्वेव संबोधयितुर्मुखाद् गृहीतमांसखण्ड शृगाल विचकार । इतश्च स तस्या नद्यास्तटे जलाद्बहि स्थित मत्स्य भोक्तु मांसपिण्ड त्यक्त्वाऽधावत्, तदा मीन पुनरपि नदीनीरं प्राविशत् । तद्विकृतपक्षिण्या मांसपिण्डमग्रहीत् ।

तत सा नग्निका शरवणोपविष्टा दु खदीनाऽपि दृष्टकौतुका त जम्बूकमुवाच—“ हे शृगाल ! दुर्मते ! मांसपेशी विहाय मीन त्वमीहसे मीनान्मांसाच्च भ्रष्ट सन् किं त्व पश्यसि ? । जम्बूक उवाच—“ हे नग्निके ! त्व निजपतिं त्यक्त्वा पत्युर्जाराच्च भ्रष्टा सती किं पश्यसि ? । तच्छ्रुत्वा क्षुब्धु विस्मयस्थास्तस्या स व्यन्तरदेवो महर्द्धिक स्व रूप दर्शयित्वैवमवोचत्—“ हे पापे ! यद्यपि त्व पाप मेवाकृथास्तथापि पापपङ्कजलप्लव जिनधर्मं समाश्रये । हे मुग्धे ! यो हस्तिकस्त्वया मारित सोऽहमस्मि, जिनधर्मप्रभावात् देवत्व प्राप्तोऽस्मि, मां पश्य । ततोऽहमपि जिनधर्मं प्रपत्स्य इति कृतनिर्णयां तां स साध्वीसन्निधौ नीत्वा परिव्रज्यामग्राहयत् ।

तस्मादस्माकनायोग्यान् प्रवर्तकनिवर्तकान् दृष्टान्ताननादृत्य त्व वैषयिक सुख भुङ्क्ष्व । ततो जम्बूनामाऽपि जगाद—“ अह विद्युन्माली खेचर इव रागग्रहिलो नास्मि, तस्य चरित त्व शृणु ।

## विद्युन्मालिकथा ।

इह भरतक्षेत्रे पक्षाभ्या पक्षीव भरतार्धाभ्या सम्पृक्तो वैताढ्यनामक. पर्वतोऽस्ति । तत्रोत्तरश्रेणिभूषण गगनवल्लभनामक पुरवरमस्ति यद्देवानाममतिप्रिय विराजते । तस्मिन् पुरे मेघरथो विद्युन्माली चेति नामतो द्वौ प्रीतिमन्तौ तरुणौ विद्याधरौ सोदरावभूताम् । तौ विद्या साधयितुं मन्त्रयामासतुः । भूगोचरसमीपे यामस्तत्रैवावयोर्विद्या सेत्स्यति । तद्विद्यासाधनेऽय विधिर्यत्—अतिनीचकुलजाता कन्या विवाह्या, ततो वर्षपर्यन्तं ब्रह्मचर्यं पालनीयमिति । ततो गुरूननुज्ञाप्यात्र दक्षिणे भरतार्धे द्वावपि तौ वसन्तपुरनगरमाजग्मतु । ततश्चाण्डालाऽऽवासं चाण्डालवेषेण गत्वा तौ बुद्धिप्रभावेण चाण्डालमाराधयाञ्चक्राते । ततश्चाण्डाला आराधिताः प्रसन्ना सन्त· प्रोचुर्युवयोश्चिरागतयोः किमत्र प्रयोजनमस्ति ? तत्कथयतम् । तौ सद्भाव गोपयित्वोचतु·—“हे हिता· ! आवा क्षितिप्रतिष्ठनगरादागतौ स्वः, आवा पितृभ्या हि कुटुम्ब-मध्याद् बहिष्कृतौ, इति हेतोः क्रोधेन निर्यन्तौ भ्रमन्ताविहागतौ स्वः” । ततश्चाण्डाला ऊचुः—“युवामस्मत्कन्ये परिणेष्यथस्तदाऽस्मत्कु-लोचित सर्वं करिष्यथ,” तावुचतुः—“आम्” इति । ततो मातङ्गास्ताभ्या द्वे कन्ये काणदन्तुरे प्रादुः । विद्युन्माली तु कुरूपायामपि कन्याया रक्तोऽभूत्, न विद्यामसाधयच्च । क्रमेण विद्युन्मालिभार्या गर्भवत्यभूत्, पूर्णे गर्भे च मेघरथो विद्या साधयित्वा सिद्धविद्योऽ-जनि । ततो मेघरथो भ्रातृस्नेहाद् विद्युन्मालिनमुवाच—“हे भ्रात· ! वय सिद्धविद्याः स्म·, चाण्डालकुलं त्यज । वैताढ्यसुखसम्पद्योग्यौ भवावः, अतस्त्व चाण्डालकन्या त्यज । वैताढ्ये खेचर्य स्वयवरा भाविन्य· सन्ति ।” सलज्जो विद्युन्माल्यवदत्—“हे सुव्रत ! त्वं सिद्ध-विद्योऽस्यतो कृतकृत्य· सन् वैताढ्यं याहि । अह तु नियमपादप भग्नवास्ततोऽधम· कथं नियमतरुजन्य विद्यासिद्धिफलं प्राप्नुयाम् । हेऽनघ ! इमा वराकीं जातगर्भां त्यक्तु नाह शक्नोमि । पुनरसिद्धविद्योऽहं त्वया सह गन्तुं जिह्रेमि । त्व साधितविद्यो याहि, अह पुनरसा-

पितृविहीनो बन्धूनां मुखं कथं दर्शयिष्यामि ? । अमुना प्रमथन मयाऽऽत्मनैवाऽऽत्मा वञ्चितः अहमिदानीमुद्योगतत्परो विद्यां साधयिष्यामि, त्वं मां भ्रातरं हृदि धारयन् वर्षान्ते पुनरिहाऽऽगच्छेः, तदा त्वया सह साधितविद्योऽहं यास्यामि ।” ततो मेघरथश्चाण्डालीप्रेमपाशबद्धं विद्युन्मालिनं नेतुमशक्तः एकाक्यपि वैताढ्यगिरिं ययौ । तत्र बन्धुभिः स पृष्टः—“ त्वमेकाकी किं समागतोऽसि ? तव भ्राता क्वास्ति ? ” इति श्रुत्वा सोवाचासौ विद्युन्मालिवृत्तान्तमादितः ।

अवसरे विद्युन्मालिनः सा चाण्डाली प्रिया पुत्रमजीजनत् । स विद्यासिद्धिमिव तां प्राप्यामोदत । स कुबुद्धिस्तस्यां म्लेच्छ्यां परमप्रेम्णाऽऽसक्त्या च विद्याधरसुखं व्यस्मरत् । सा काणदन्तुरा चाण्डाली विद्युन्मालिना सह यथासुखं क्रीडन्ती पुनरपि गर्भं दधौ ।

इतश्च विद्यासम्पन्नो मेघरथस्तत्र वर्षान्ते जगाम भ्रातृस्नेहवशात् । सोऽचिन्तयदेवम्—“ अहं स्वर्गाङ्गनासदृशविद्याधरवधूवृतोऽस्मि । स मे भ्राता काणदन्तुरम्लेच्छीगार्हस्थ्यनरके स्थितः । अहं पुनः सप्तभूमे प्रासादे उद्यानशोभिते निवसामि, स तु श्मशानाग्निव्याप्ते चाण्डालकुटीरके वसति । अहं नानाविधविद्यर्द्धिभिः सिध्यमानमनोरथोऽस्मि स तु जीर्णवस्त्रधारी कदन्नभुक् चास्ति । ” एवं विद्युन्मालिनि सौभ्रात्रानुरूपं चिन्तयन् मेघरथो वसन्तपुरपत्तनं जगाम । तत्र गत्वा भ्रातरमुवाच—“ हे भ्रातः ! त्वं वैताढ्यगिरौ विद्याधरसुखैश्वर्यं महत्तरं कथं न भुङ्क्षे ? ” ततो विद्युन्माली विलक्षं हसित्वेदमूचे—“ हे भ्रातः ! इयं पत्नी मम जातवत्सा पुनर्गर्भवती विद्यते, तस्मादिमामनन्यशरणां स्त्रीं गुर्विणीं वज्रहृदयस्त्वमिव नाहं त्यक्तुं शक्नोमि । हे भ्रातस्तस्माद् गच्छ अन्यदा दर्शनं दद्याः, अहमप्यु समयमत्रैव यापयिष्यामि त्वं मा क्रुध्य । ” ततो मेघरथस्तं प्रबोधं प्रबोधमतिखिन्नः पुनस्ततो निरगमत्; यतोऽतिजडे नरे हितोऽपि जनः किं कर्तुं शक्नुयात् ? ।

अथ विद्युन्माल्यपि द्वितीये पुत्रे जाते चाण्डालकुल स्वर्गादप्यधिकं मुदाऽमन्यत । वस्त्रभोज्यादिदौःस्थ्येऽपि स दुःखं न विदाञ्च-
कार । तौ चाण्डालीकुक्षिभवौ बालौ सलीलमुदलालयत् । स ताभ्यां क्रोडस्थाभ्यां पुनः पुनर्मूत्रयद्भ्यां गन्धोदकस्नानमिव मूत्रस्नान-
ममन्यत । तं म्लेच्छ्यपि सुभगमन्या पदे पदे ततर्ज; तथापि तदासक्तः स चाण्डालकुलकिङ्करो बभूव ।

मेघरथः पुनर्भ्रातृस्नेहवशादागत्य गद्गदया वाचा विद्युन्मालिनमालिङ्ग्य जगाद—" हे कुलीन ! त्व चाण्डालकुले मा तिष्ठ, तवात्र
काऽऽस्था ? । हंसो मानसोत्पन्न किं गृहस्रोतसि रमते ? । यत्र कुले त्वमुत्पन्नोऽसि तत्कुल न मलिनीकुरु । यथा धूमेनाग्निस्तथा त्वम-
नेन दुराचारेण मलिनो जात ।" एव प्रबोध्यमानोऽपि स नागन्तुमैच्छत् । ततो मेघरथो नाहमत्र पुनरागमिष्यामीत्युक्त्वा ततोऽगमत् ।

अथ मेघरथ. पैत्र्यं राज्य चिरमपालयत् । एवं मेघरथो बुद्धिमान् सुखराशिं लेभे, विद्युन्माली तु भवसागरे बभ्राम । हे पद्मसेने !
विद्युन्मालीवोत्तरोत्तरसौख्यातिलम्पटो रागान्धो न भविष्यामि । तत कनकसेनोवाच—" हे स्वामिन् ! किञ्चिन्मामपि मानय । शङ्खधमक
इव त्वमतिशयं न कुरु ।

## शङ्खधमककथा ।

शालिग्रामे कश्चिदेकः कृषीवलो बभूव । स प्रातरारभ्य सायं यावन्नित्य क्षेत्रं ररक्ष । स क्षेत्रसमुद्रे मञ्चपोतमारूढः शङ्खशब्देन
दूरादागच्छतः सत्त्वान् पलाययामास । एकदा चौरा गोधनं चोरयित्वा क्षेत्रसमीपे समागताः शङ्खनादं श्रुत्वैवमचिन्तयन्—" अहो ! अमी
ग्रामपुरुषा गोधनं वालयितुकामा अग्रेऽप्याजग्मुः, यदयं शङ्खनादोऽतिनिकटे भवति " इति विचार्य ते चौरा गोधनं परित्यज्य प्रात-
स्तरूत्थखगवत् दिशो दिश पलायाञ्चक्रिरे । ततस्तत् क्षुभितं गोधनं शनैः शनैश्चरदरुणोदयसमये तत्क्षेत्रसमीपमागमत् । स कृषीवलो

गोमुखाभिमुखं यावद्धाव तावन्निर्मनुष्यं सर्वं दृष्ट्वैवमचिन्तयत्, मम शङ्खशब्दं श्रुत्वा तस्करा गोधनं त्यक्त्वा तत्रागमिशङ्कया, पाप सर्वत्र शङ्कते । निःशङ्कः स कृषीवलस्तद्गोधनं गृहीत्वा ग्रामे सर्वस्मै ददौ । स उवाच—" मम देवतयाऽदो गोधनं दत्तं भवद्भिर्गृह्यताम् इति । ततः स ग्रामवासिजनसमूहेन गोमान् कृतः । ग्रामस्तु तं ग्रामयक्षमिव मेने, यतो यो ददाति स देवता भवति । स कृषीवलो लब्धप्रसरो द्वितीयेऽपि वर्षे क्षेत्रं गत्वा तत्र निशि शङ्खं ध्मातुमारेभे । एकदा त एव चौरा अन्यस्माद् ग्रामाद् गोधनं हृत्वा तत्क्षेत्रस्य निकटे महानिशि समाजग्मुः । तस्य शङ्खधमस्य महान्तं शङ्खध्वनिं श्रुत्वा क्षुब्धाः सौष्ठवं समाश्रित्य परस्परं जगदुः—" अत्र प्रदेशेऽत्र क्षेत्रे पुरा शङ्खध्वनिर्यथा श्रुतस्तथाऽधुनाऽपि श्रूयते । ते गुहास्तु एवावासाः सन्ति । कोऽप्ययं क्षेत्रपालकोऽस्ति, प्राणिभ्यः क्षेत्ररक्षार्थं शङ्खं नूनं धमति । वयं धिक् पुरा शङ्खध्मानेन वञ्चिता अभूम " ततस्ते तस्करा तूलवर्तिका इव हस्तान् घर्षयन्तो दन्तैरधरान् पीडयन्तः यथा गोस्तनात् वत्सास्तथा हस्तिनः शुण्डादण्डानिव लकुटानुत्थापयन्तो क्षेत्रान्तर्गोवृषा इव शस्यान्यान्दोलयन्तश्चौरकुञ्जराः शङ्खनादानुसारेण गच्छन्तस्तं मञ्चारूढं शङ्खधमं नरं ददृशुः । ते मञ्चकाष्ठान्यान्दोल्य मञ्चं भूतले न्यपातयन् । सोऽपि कृषीवलो निराधारो भुवि पपात, यतो निराधारं न किञ्चिदप्यवतिष्ठते । ततश्चौराश्च कणमूटकवत् तं लकुटैरताडयन् । स भुञ्जान इव मुखे पञ्चाङ्गुलीश्चिक्षेप । ते चौरास्तत्करौ संयोज्यास्थिनिर्मम्नबन्धं बद्ध्वा बद्धाञ्जलिमिव तमलक्षयन् । चौरास्तस्य गवादिवज्ञान्तं धनमग्रहीषुः । तदा क्षेत्रपालो नग्नः सन् क्षेत्रपाल इवाभवत् । ते चौराः शङ्खधमं तत्रैव मुक्त्वा ययुः । प्रातर्गोपास्तं पप्रच्छुः, सोऽपीदमचकथत्—" धमेद्धमेव, परन्तु नातिधमेत्, यतोऽतिध्मातेन यद् ध्मातोपार्जितधनं तन्मया हारितम् ।

हे नाथ ! तस्मात् तवाप्यतिशयः कर्तुं नोचितः । अस्मानपि पाषाणकठोरस्त्वमवज्ञातुं नार्हसि । ततो जम्बूरम्बुशीतलवाचोवाच—

" अहं यथा शैलेयवानरो बन्धनानभिज्ञस्तथा नास्मि। तथाहि—

## शैलेयवानरकथा।

वनलक्ष्म्याऽवन्ध्यो विन्ध्यो नाम गिरिरस्ति। तत्रैको महावानरयूथपतिर्बभूव। विन्ध्याद्रिवनगह्वरे कुमार इव स यूथसम्भवान् सर्वान् वानरान् निराकरोत्। स एवैको महाबलो वानरीभिः सार्धं बहुवनितराज्यसाम्राज्यसुखलीला वितन्वन् रेमे। एकदा कश्चिद् युवा वानरो मदोद्धतो वानरीरागाद् वृषस्यन् तं वानरमनादृत्य कस्याश्चिद्वानर्या धवलदन्ताङ्कुर पक्वारुणविकसद्दाडिमभ मुखं चुचुम्ब। कस्याश्चिन्मुख केतकीपुष्पपरागेणाऽऽच्छादयामास। कस्याश्चिद् गले गुञ्जाहारं स्वय कृत्वा पर्यधापयत्। कस्यैचिद् बिल्वदलैर्वीटिकां कारं कारं समर्पयामास। कामपि निर्भरमालिङ्ग्य प्रालम्बहिण्डोलकमध्यास्त। एव बहुबलगर्वादमेतनं यूथप न जानानो नि.शङ्कं वानरीभिररंस्त। तदा कयाऽपि नखैः कण्डूय्यमानलाङ्गूलः, कयाऽपि प्रमृज्यमानसर्वाङ्गरोमराजि·, कयाऽपि कदलीतालवृन्तेन वीज्यमानः, कयाऽपि कमलनालैः क्रियमाणावतंसक उच्चै· शिखरस्थ· स जरन् यूथपतिर्द्राग् वानरयुवान तं दृष्ट्वा कोपादधावत्। लाङ्गूल नर्तयन् स वानरयूथपतिस्त वानरयुवान रोषेण पाषाणखण्डेन जघान। तत· स वानरेन्द्रयुवाऽपि लोष्टाहत· सिंह इव क्रुद्धो घुरघुरारावं कुर्वंस्तं प्रत्यधावत्। मिथः क्रोडीकृतसर्वाङ्गौ तौ दुर्द्धदावपि सुचिरान्मिलितौ सुहृदाविव भूतौ दन्ताग्रैस्त्रटत्त्रटेति अङ्गुलीभिश्चटच्चटेति परस्परं युध्यमानौ तौ वपुषि व्यापप्रतुः। तदा परस्परं दन्तनखक्षतक्षतजशोणितचर्चितौ परिहितरक्तचोलकाविव तौ शुशुभाते। क्षणाद्बन्ध क्षणान्मोक्षं प्रयुञ्जानौ तावुभौ यथा द्यूतकारौ क्रीडतस्तथा युध्यमानौ तौ रेजतु·। अन्ते वानरयूना मुष्टिप्रहारेण भग्नास्थिः स वृद्धकपि शीघ्र शीघ्रमपससार, मन्दं मन्द च त्वढौकत। ततो युवा वानरस्त वृद्धवानरमपसरन्तं लोष्टघातेन जघान, तेन वृद्धवानरमस्तकं पुस्फोट। ततः प्रहारपीडितः

स वृद्धो यूथपतिर्वानरो दूरोत्पातिमुक्तप्राणवदङ्गः दूरं ययौ। तत्र महातपपीडितस्तृषितः स भ्रमन्नेकस्मिन् गिरौ प्रसरच्छिलाजतु ददर्श। स जलबुद्ध्या शिलाजतुनि मुखं न्यधात्। ततस्तन्मुखं भूमेरुत्थितमिव तत्रैव विलग्यास्थात्। तेन मन्दमतिना मुखमाकर्षामीति शिलाजतुनि निक्षिप्तौ बाहू लगित्वा तस्थतुः। ततस्तेन क्षिप्तौ पादौ मुखहस्तवद् विलग्नौ। अथ स कीलितपञ्चाङ्ग इव तत्रैव कालधर्ममवाप। पाणिपादाऽऽबद्धः स वानरो यदि मुखमाकर्षेत् तदा मुच्येत शैलजतात्, अत्र न संशयः। यथा जिह्वेन्द्रियमात्रलुब्धो मुग्धो वानरो नष्टः, एवं शैलेयनिभासु नारीषु पञ्चसङ्ख्यैरिन्द्रियैरपि मज्जन् देही कथं न विनश्येत्?, तथाऽहं तु नास्मि।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप-परिशिष्टपर्वणः श्रीतपोगच्छाधिपति-
शासनसम्राट्-सूरिचक्रचक्रवर्ति-आचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ-शान्तमूर्ति-आचार्यश्री
विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि-प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न-
व्याख्यानवाचस्पति-पंन्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते
गद्यानुबन्धे जम्बूस्वामिविवाहादिशैलेयवानरकथान्तवर्णनात्मको द्वितीयः सर्गः ॥ २ ॥

---

## तृतीयः सर्गः ३ ।

अथ नभःसेना कृताञ्जलि–र्ऋषभनन्दनमुवाच–“ त्वं स्थविरावन्मा भूः, स्थविरायाः कथा यथा—

### स्थविराकथा

एकस्मिन् ग्रामे नामतो बुद्धिः सिद्धिश्च स्थविरे बभूवतुः । ते द्वे अपि परस्परसख्यौ नित्यमत्यन्तदुःस्थिते अभूताम् । तस्य ग्रामस्य बहिः प्रतिष्ठित. प्रसिद्धो भोलको नामाभीप्सितधनप्रदो यक्षोऽस्ति । तं यक्षं बुद्धिनाम्नी दीना स्थविरा प्रत्यहमाराधयामास । सा त्रिसन्ध्यमपि देवकुलं संमार्जयति स्म, यक्षाय च पूजनपुरस्सरं नैवेद्यमर्पयाञ्चक्रे । अन्यदा तुष्टो यक्षस्ते किं ददामीति जगाद, यत आराध्यमानः कपोतोऽपि प्रसीदति । ततो बुद्धिरुवाच–“ यदि त्वं तुष्टोऽसि तदा तद्देहि येन सुखसतोषभागहं जीवामि ” । यक्ष उवाच–“ हे स्थविरे बुद्धे ! त्वं सुस्थिता भव, मम पादमूले दिने दिने त्वं दीनारं प्राप्स्यसि ” ततः सा तत्प्रभृति प्रत्यहं दीनारं लभमाना कृतकृत्याऽभूत् । स्वजनाज्जनपदाच्च सा वृद्धाऽधिकधनवत्यभूत्, या स्वप्नेऽपि सुन्दरवस्त्रादिसम्भारं नापश्यत् सा प्रतिक्षणं नवं नवं वस्त्रं भूषणं च राज्ञीव पर्यधात् । यस्याः पुनः काञ्जिकेच्छाऽपि नापूर्यत, तस्याः सहस्रशः कुण्डोघ्न्यो धेनवो बभूवुः । याऽऽजन्मापि जीर्णतृणकुटीरे न्यवसत्, सा वेदीमत्तगजशोभितं प्रासादमकारयत् । या परगृहगोमयत्यागकर्मणाऽजीवत्, तस्याः स्तम्भलग्नाः पाञ्चाल्य इव दास्यः सेविका बभूवुः । या स्वग्रासचिन्ताकुलिता सदाऽभूत्, सा यक्षदत्तसम्पदा दीनानुद्धर्तुं प्रारेभे ।

ततः सिद्धिनाम्नी स्थविरा तादृशीं बुद्धिसम्पदं दृष्ट्वा जातमत्सराऽचिन्तयत्–“ अहो अस्याः कुत ईदृशी सम्पत् सम्पन्नाऽभूत् ? भवतु, अस्या. सदा सखीत्वेनाहं विश्वासभागस्मि, तस्मादिमामेव चाटुशतानि कृत्वा प्रक्ष्यामि ” । एवं विचिन्त्य बुद्धिमती सिद्धिर्बुद्धिं

स्थविराभ्युपययौ । दृष्ट्वा च प्रियसखीति सा सत्कृता सत्युवाच—" हे सखि ! बुद्धे ! तवेदृश्यचिन्तिता सम्पत् कुत आगात् ? तव सम्पद्दर्शनेन चिन्तामणिः प्राप्त इत्यनुमीयते । अथवा किं ते कोऽपि राजा प्रासीदत् ? वा काऽपि देवता ?, किं वा किमपि निधानं प्राप्तम् ? वा किं कोऽपि रसः साधितस्त्वया ?, हे सखि ! सम्प्रत्युत्पन्नाऽहमपि सम्पत्तिमत्यभूवम् । अद्य मया दारिद्र्यदुःखाय जलाञ्जलिर्दायि । अहं त्वं त्वमहम्, प्रीत्या देहेऽप्यावयोर्न भेदोऽस्ति । आवयोः परस्परं किमपि नाकथनीयमतस्त्वं कथय—" इयं सम्पत् कुत आगमत् " । ततो बुद्धिस्थविरा तद्भावमबुध्यमाना यथातथमकथयत्, यथा मया यक्ष आराधितः, यथा च यक्षेण सम्पद् दत्ता, तथा साऽकथयत् ।

ततः सिद्धिस्तच्छ्रुत्वा दध्यौ—" साधु साधु ममापि धनोपार्जनोपायो निरपायो भविष्यति । अहं सविशेषं यक्षमाराधयिष्यामि, यथा मे सविशेषा सम्पद् भविष्यति । अथ धनप्राप्तये सिद्धिस्थविरा बुद्धिदर्शितप्रकारेणाहर्निशं यक्षमाराधयितुमारेभे । सा सिद्धिः विविधभक्तिभिः खटिकाधातुभिर्यक्षस्य मन्दिरं भूषयामास, तथा सोपानश्रेणिं चालञ्चकार । कर्तव्यभक्तिप्रकारास्तनिमान् गणयन्तीव सा स्वस्तिकरेखाभिर्यक्षाङ्गणं भूषयामास । सा स्वयं जलमानीय प्रत्यहं स्वीकृतोपासनानियमा यक्षं स्नपयामास । सा स्वयमाहृतैर्बिल्वदल-करवीरतुलसीकुब्जकादिभिर्यक्षं विलिप्य पूजयाञ्चकार । सा यक्षमन्दिरे यक्षाभियोग्यव्यन्तरीवैकभक्तोपवासादितत्पराऽहर्निशं न्यवसत् । तत एवमाराधितस्तुष्टो यक्ष उवाच—" हे महाभागे ! अहं तुष्टोऽस्मि । यदिच्छसि तत्प्रार्थयस्व " । अथ सा सिद्धिः पूर्णसम्पदं यक्षं प्रार्थयाञ्चकार—" हे यक्ष ! त्वया मत्सख्यै बुद्ध्यै यद्दत्तं तद्द्विगुणं मे देहि " । ततो भोलाख्यो यक्ष एवमस्त्वित्युक्त्वाऽन्तर्दधौ । ततः सिद्धिरपि क्रमेण बुद्धितोऽधिकसम्पद्विभाक् समजनि ।

बुद्धिः सिद्धिं द्विगुणसम्पत्तिलाभेनाधिकर्द्धिं दृष्ट्वा पुनरपि यक्षमाराधयत्। यक्षोऽपि तुष्टस्तस्यै तद्द्विगुणं धनं ददौ। ततः सिद्धिस्तस्याः स्पर्धया पुनरपि यक्षमाराधयत्। ततस्तुष्टे यक्षे दुष्टात्मा सिद्धिश्चिन्तयामास—"अहं प्रसन्नाद्यक्षाद् यत्किञ्चित् प्रार्थयिष्ये तद्द्विगुणं द्रव्यं बुद्धिर्यक्षमाराध्य प्रार्थयिष्यति। तस्मादहं तथाचे यद् द्विगुणमर्थितं बुद्धेरपकाराय जायेत, तदा मे बुद्धिः साधीयसी स्यात्। इति चिन्तयित्वा मे नेत्रमेकं काणीकुरु इत्ययाचत। यक्षेणैवमस्त्वित्युक्ते सद्यः सा काणा बभूव। ततो बुद्धिः पुनर्मम सख्यै यक्षः किमप्यधिकं ददाविति तद्द्विगुणकाङ्क्षिणी सती यक्षमाराधयामास। ततस्तुष्टाद् यक्षाद् बुद्धिरप्येतादृशं प्रार्थयामास—"हे यक्ष! सिद्ध्यै यद् दत्तं तद्द्विगुणं मे देहि।" यक्ष एवमस्त्विति कथयित्वा तिरोदधे। सा बुद्धिः सद्योऽन्धाऽभवत्। यतो देवतावचो मिथ्या न भवति एवं बुद्धि-स्थविरा पूर्वप्राप्तया सम्पदाऽतृप्ताऽतिलुब्धा स्वेनैव स्वं विनाशयामास। एवं मानुषश्रियं प्राप्यातिश्रियमिच्छंस्त्वमप्यन्धस्थविरावद् भविष्यसि॥

ततो जम्बूनामोवाच—"हे देवानांप्रिये! अहो!! अहं नोत्पथगाम्यस्मि, यथा जात्याश्वस्तथा। तस्य कथां शृणु——

## जात्याश्वकथा

तथाहि——वसन्तपुरपत्तने प्रतापेन जितशत्रुरद्भुतलक्ष्म्या विराजमानो जितशत्रुनामा राजाऽभूत्। बुद्धिधनवता श्रेष्ठ श्रेष्ठी जिनदास-नामा विश्वासपात्रं मित्रं तस्य राज्ञोऽभूत्। एकदाऽश्वपालका लक्षणवन्तो रेवन्तपुत्रानिवाश्वकिशोरांस्त राजानमदर्शयन्। तदा राजाऽश्व-लक्षणविदामादिदेश—"के केऽश्वाः कैः कैर्लक्षणैः सम्पूर्णा इति कथयत"। ते च शास्त्रोक्ताश्वलक्षणसम्पन्नमेकं घोटककिशोरं राजानं न्यवेदयन्।

असावश्वो वृत्तखुरः स्तब्धसन्धिर्जङ्घासुरमध्ये, निर्मांसजानुजङ्घास्य कुक्षिसोन्नतकन्धरः स्निग्धरोमा कोकिलस्वरो मल्लिकाक्षो लघु-

स्वर्णवर्णो लम्बकेसर पञ्चभद्रो गूढवंश स्कन्धादिसप्तके स्थूल, उरस्यादिषु शुभावर्तदशकेन भूषित, क्षुद्रावर्तादिदुष्टावर्तैरहित स्निग्धदन्तोऽश्व किशोर स्वामिनो लक्ष्मीं पुष्टीकरोति ।" स्वयं विज्ञो राजाऽपि तमश्वं लक्षणवन्तं विज्ञाय केसरयुतजलेन स्वयं सर्वाङ्गमानर्च । अथ राजा तस्याश्वस्य पुण्यवर्द्धं पूजां विधाय लवणोत्तारणादिकां कारयामास । अचिन्तयच्च—एनमश्वं को रक्षितुं समर्थः ? प्रायेण भूतले रत्नानि विघ्नबहुलानि भवन्ति । अथवा मम विश्वासपात्रं प्रख्यातो जिनदासनामा श्रावको मम परमप्रियोऽस्ति । स च बुद्धिमान् स्वामिभक्तः प्रमादहीनश्चास्ति । स एवैतस्याश्वस्य न्यासपात्रं भवितुमर्हति ।

अथ राजा जिनदासमाहूयाऽऽदिशत्—"अयमश्व आत्मेव त्वया रक्ष्यः"। ततो जिनदासः "आदेशः प्रमाण"मित्युक्त्वा रक्षकयुतं तमश्वं गृहे निन्ये । स तस्याश्वकिशोरस्य स्थानं स्निग्धकोमलवालुकं गङ्गापुलिनवत् सुखदं रचयामास । स तमश्वं रजोरहितानि पत्रलानि स्वादूनि हरितानि तृणानि स्वयमेव भोजयामास । स स्वयं तमश्वं वालुकामध्ये लोष्टकण्टकहीने भूप्रदेशे मुखरज्जो धृत्वा वेल्लयामास । स स्वस्नानसमये सुगन्धिभिः स्नानीयैरेकत्रस्थैर्जलैस्तमश्वं स्नपयामास । नीरोगोऽयं न वेति प्रत्यहं तमश्वं परीक्षितुं तस्य नेत्रपक्ष्मणी पर्यस्य पर्यस्य ददर्श । स्वयं तमारुह्य स प्रथमधारया सुखं वेल्लयन्ननुदिनं सरसि जलं पाययितुं निन्ये । तस्य गृहस्य सरोवरस्य चान्तरे महज्जिन-मन्दिरमासीत्, यत् संसारसागरस्यान्तरीपमिव कदापि तेन नाऽऽक्रान्तमभूत् । अर्हन्मन्दिरानादरो माभूदिति सोऽश्वारूढस्तं प्रदक्षिणी-कृत्य गमागमकाले प्रतिदिनं स्वं कृतार्थयन्नासीत् । स देवतत्त्वज्ञोऽश्वारूढोऽपि देवमवन्दिष्ट, प्रमादो मा भूदित्यश्वारूढ एव न प्राविशत् । जिनदासस्तमश्वं तथाऽशिक्षयत् यथा स सरोगृहं चैत्यं च विहायान्यत्र नागच्छत् । यथा यथा शनैः शनैः सोऽश्वकिशोरो ववृधे तथा तथा राजगृहमध्ये सम्पदो ववृधिरे । तदश्वकिशोरप्रभावेण स राजा सर्वभूपतिमध्ये आज्ञाकारकेन्द्रोऽजायत । ते चाऽऽज्ञाकरणोद्विग्ना राजानं

एव दध्यु –" यदश्वप्रभावाद्वय जिता सोऽश्वो मारणीयोऽथवा हरणीय "। तस्याश्वस्य तथाकर्तुमशक्तेषु राजस्वेकस्य सामन्तस्य बुद्धिमान् मन्त्री जगाद–" अह केनाप्युपायेन तमश्व हरिष्यामि" उपायस्य किं दुष्करम्? यत उपायशक्तेर्मान नास्ति।" स धीनिधिर्मन्त्री एव कुर्वेति सामन्तेनादिष्टो मायया श्रावकीभूय वसन्तपुरपत्तनमगात्। स तत्र चैत्यानि वन्दित्वा सुविहितानपि मुनीन् वन्दित्वा जिनदासगृह गत्वा तद्गृहचैत्यमवन्दत। श्रावकवन्दनेन जिनदास धूर्ततया श्रावकत्व दर्शयन् स ववन्दे। अथ साधर्मिकवत्सलो जिनदासस्तमभ्युत्थाय वन्दित्वा पर्यपृच्छत्–" महाशय! कुत आगमत्?"। ततः कपटश्रावक उवाच–" अह निःसारे ससारे विरक्तोऽस्मि, " अह शीघ्र प्रव्रजिष्यामि, मम गार्हस्थ्येनालम्, अह निष्कपटो धर्मबान्धवस्तीर्थयात्रा कृत्वा सुगुरो पार्श्वे व्रत ग्रहीष्यामि।" जिनदासोऽप्युवाच–" हे महात्मन्! तव स्वागतमस्तु, समानशीलयोरावयोर्धर्मगोष्ठीसुखानि भवन्तु। धर्मिषु दानशौण्ड स तथेति स्वीकृतवन्त त मायाश्रावक निजबन्धुमिव प्रेम्णा स्नपयामास। तस्य शिरसि स्नानेन निर्मलीकृतकेशान् कस्तूरीपङ्कमलिनाश्चकार। तस्य सामन्तमन्त्रिणो मूर्धनि आलेख्यालिखितसन्निभं पुष्पमाल्यगर्भं धम्मिल्लमबध्नात्। सुगन्धिना तनीयसा चान्दनेन ज्योत्स्नासदृशेनाङ्गरागेण तस्याङ्गमचर्चयत्। स धर्ममति त निर्दग्धागरुकर्पूरकस्तूरीवासितानि वस्त्राणि पर्यधापयत्। जिनदास क्षणेन तदर्थं लेह्यचोष्यपेयाऽऽस्वाद्यवह्वा रसवतीमकारयत्। ततो जिनदासेन हंसरोमासनमध्यासित. व्यजनेन वीज्यमान स मन्त्री विविधैर्भोज्यैरभोजि।

अथ भोजनानन्तर जिनदासस्तेन दुरात्मना कपटश्रावकेण धर्मकथा प्रारेभे। तदा जिनदासस्यैक स्वजनोऽभ्येत्योवाच–" हे बन्धो! श्व कल्याणकार्येण मम गृहमुपेहि; तत्र त्वया सकलमहोरात्र स्थातव्यम्, यतस्त्वं कल्याणकुशलोऽसि, त्वया विना कल्याण किम्?" ततो जिनदास आमित्युक्त्वा तं विसृज्यातिहारगीः सरलस्त कपटश्रावकमुवाच–" हे अभ्यागत! मया स्वजनगृहेऽवश्यं गन्तव्य, मयि

गते मद्गृह त्वद्गृहमिति तद्रक्षणीयम् ।" आमिति हसन् स स्वीचकार । ततोऽस्मिन् दुर्मतौ जातविश्वासो जिनदासो जगाम । तस्मिन् दिने पुरे महान् कौमुद्युत्सवो हल्लीसपूर्वक पुरवधूरासकलासकोऽभवत् । रात्रौ जनपदे कौमुदीमहमग्ने सति स मायाश्रावकस्तमश्वमादाय निर्जगाम । सोऽश्वोऽपि चैत्यस्य त्रि प्रदक्षिणा कृत्वा वार्यमाणोऽपि तस्मिन् सरसि जगाम नान्यत्र । तत परावृत्त सोऽश्व पुनर्देवालय मगात्, देवालयाद् गृह ययौ नान्यत्र कुत्रचित् । स दुःसामन्तसचिवस्तमश्वमन्यत्र नेतु शक्तो यावन्नाभूत् तावद् रात्रि प्रकाशिताऽभूत् । स दुरात्मा पलायिष्ट । सूर्ये उदगात्, तदा जिनदासोऽपि गृह प्रति न्यवर्तत । आगच्छञ्जिनदासो जनमुखादिद शुश्राव—" तवाश्व कौमुदीमहे सकला रात्रिं वाहित "। किमेतदिति चकितो जिनदासोऽपि गृहमगात् । तमश्व श्रान्त क्षाम स्वेदमलिन च ददर्श । भाग्येनायमश्वोऽस्ति अह तु धर्मच्छलेन वञ्चितोऽस्मि, इति स हर्षविषादौ प्राप । तत्प्रभृति स तमश्व सविशेषमरक्षत् । स उत्पथ न जगामेति जिनदासस्यातीव प्रियोऽभूत् । तमश्वमिव मां कोऽप्युत्पथ नेतु न शक्नोति । तस्मात् परलोकसुखद पन्थान न त्यक्ष्यामि,

अथ कनकश्री प्रेमबन्धुरं सहासमुवाच—" हे स्वामिन् ! ग्रामकूटसुत इव त्व जडो मा भव ।"

## ग्रामकूटसुतकथा ।

एकस्मिन् ग्राम एको ग्रामकूटसुतोऽभूत् । स मृतपितृकोऽत्यन्तदुःखितमातृको बभूव । रुदती माता तमुवाच—" हे पुत्र ! त्व कापुरुषशिरोमणिरसि । तव परकथां विनाऽन्यत् कर्म नास्ति । तव पिता व्यवसायी व्यवसायेनाजीवत् । आरब्ध व्यवसाय सदा निरवाहयत् । त्व तु युवाऽपि व्यवसाय कदापि नारभसे । आरब्धव्यवसायस्य निर्वाहे कथैव का ? । तव समानवयस्काः स्वेन कर्मणा जीवन्ति । त्व ग्रामषण्ड इव भ्राम्यन् निष्कर्मा सन् न लज्जसे । महादारिद्र्येणेदमुदरं बिभर्षि । त्वमुदरे भृते कोशो भृत इति मन्यसे ।"

ततः पुत्र उवाच—" हे मात. ! अत· परमहमनर्गलो न भविष्यामि, धनोपार्जनोद्यम करिष्यामि । हे मातर्यथा मे पितोत्साही प्रारब्धं व्यवसायं धनोपार्जनाय निरवाहयत् तथाऽहमपि करिष्यामि ।

एकदा ग्रामसभायामुपविष्टस्य पश्यतस्तस्य कस्यचित् कुम्भकारस्य गर्दभ पादबन्धन त्रोटयित्वाऽनश्यत् ! पलायमानं तं गर्दभ कुम्भकारोऽप्यन्वधावत् । खर धर्तुमशक्त· स इदमूर्ध्वबाहुरुवा च—"भो भो ग्रामसभोपविष्टा सर्वेऽपि ग्रामबालकाः ! युष्माकं मध्ये कोऽपि समर्थोऽस्ति यो मम खर धृत्वा मेऽर्पयेत्, ततो ग्रामकूटसुतस्तस्मादर्थलाभ विचिन्तयन् धावित्वा तं खरं पुच्छे वृन्ते फलानीवाग्रहीत् । स लोकैर्वार्यमाणोऽपि यावत्तं खरं नामुचत् तावत्तत्पादाघातेन भग्नदन्त सन् भूतलेऽपतत् । तस्मात् हे नाथ ! त्वमप्येवमसद्ग्रह·मनुत्सृजन् यत्फल प्राप्स्यसि तन्मया न किमपि ज्ञायते । अथ जम्बूनामा हसन्नुवाच—"स्वकार्यग्रहिल सोल्लक इव नाहमस्मि ।

## सोल्लककथा ।

एकस्य भुक्तिपालस्यैकोत्तमा घोटिकाऽभूत्, ता स पुत्रीमिव स्वयमलालयदपालयच्च । सोऽश्ववृद्धिदं सोल्लकं नामपुरुषं समादिश्य ता घृततैलौदनादिभिरसेवत । पर च सोल्लको घोटिकार्थं दत्त स्वादुस्वादुभोज्य किञ्चित्तस्यै दत्त्वाऽधिक स्वयमेव बुभुजे । सोल्लकोऽपि चिर तया वञ्चनया घोटिकाजीवविषयमाभियोगिकं कर्मार्जयामास, स तेन वञ्चनकर्मणा कालधर्मं प्राप्य वने मूढ· पान्थ इव दीर्घकालं तिर्यग्गतौ भ्राम्यन्नेकदा क्षितिप्रतिष्ठनगरे सोमदत्तनामकब्राह्मणस्य सोमश्रीकुक्षिज पुत्रो बभूव । साऽर्वती मृत्वा भवं भ्रान्त्वा तस्मिन्नेव पुरे कामपताकागणिकायाः पुत्रीत्वेनोत्पन्ना । स सोल्लकजीवोऽपि मातापितृभ्या पोष्यमाण. कणभिक्षया क्रमेण यौवनं प्राप । धात्रिभिर्हारयष्टिवत् हृदयाग्रे धार्यमाणा साऽपि वेश्यापुत्री क्रमेण यौवन प्राप । तस्याः वपु·पावनयो रूपयौवनयो परस्परं भूष्यभूषण-

ताऽस्यम्व समानैवाभवत्। मालत्यां भ्रमरा इव तस्यां महाधनिका ग्रामतरुणा परस्परं स्पर्धमाना अत्यन्तमनुरक्ता बभूवु । सोऽपि ब्राह्मणपुत्रस्तस्यामासक्त एव तद्द्वारमशिश्रियत् यत कामः भवद्रूपो भवति । सा वेश्यापुत्री महाधनिभिर्नृपामात्यश्रेष्ठिपुत्रादिभि सह रममाणा त ब्राह्मणसुत तिरश्चकार, परन्तु स तां दृष्ट्वैवाजीवत्। सा तु त दरिद्र दृष्ट्वापि न सम्मानयामास। यतो वेश्यानामय स्वभावोऽस्ति यद्धनिनि रागो भवति न तु दीने । स ब्राह्मणसुत कामबाणपीडितस्तत्पार्श्व त्यक्तुमसक्तस्तस्या दासत्व स्वीचकार। स कृषिकर्माणि सारथ्य जलवाहन कणपेषण च चक्रे । तस्य किमप्यकार्य नाभूत्, स बहिष्क्रियमाणोऽपि तद्गृहान्न बहिर्जगाम । तृषा बुभुक्षां भर्त्सनां ताडनाद्यपि सेहे । तस्माद्युष्माद्ध घोटिकासदृशीव्वहमाभियोगिक कर्म नार्जयिष्यामि यथा सोऽर्जयत्तथा, युष्माकं युक्तिकल्पनैरलम् ।

तत कमलवत्युवाच—“ हे नाथ ! मा साहसपक्षिवत् त्व साहसिको भा भू ,

## मासाहसपक्षिकथा ।

एक पुमान् दुर्भिक्षपीडित स्वजन विहाय महता सार्थेन सह देशान्तरे चचाल । एकस्मिन् महावने सार्थे आवासिते सति स एकोऽपि तृणकाष्ठाद्यानेतु निर्ययौ । तदा वनगह्वरे एक पक्षी सुप्तव्याघ्रमुखाद्दन्तलग्नमासखण्डान्यादाय वृक्षमारोहत्। मा साहसमिति पुन पुनर्भणन् मासखादक स पक्षी तेन पुरुषेण सविस्मयमगादि, मा साहसमिति भणसि व्याघ्रमुखान्मांस च खादसि, त्व मूर्खो दृश्यसे, यतो वचनानुरूप न करोषि । ” तस्मात् साक्षाद् भवत्सुख हित्वाऽदृष्टसुखेच्छया तपश्चिकीर्षुस्त्वमपि मासाहसपक्षिवदसि । ततो हसित्वा जम्बूरुवाच—“ त्वद्वचसा नाह मुह्यामि, मित्रत्रयकथां जानानोऽह स्वार्थात्न भ्रश्यामि ।

## मित्रत्रयकथा ।

क्षितिप्रतिष्ठनगरे जितशत्रुभूपते सर्वत्राधिकारी सोमदत्तनामा पुरोहितोऽभूत् । तस्य सहमित्रनामैक· सुहृदभूत्, स भोजनपानादिभिरैक्यवान् सर्वत्र मिलित आसीत् । तस्य पुन पर्वमित्रनामाऽपर· सुहृदभूत् । स च पर्वस्वागतेष्वेव सन्मान्य आसीन्नान्यदा । तस्य प्रणाममित्रनामा तृतीय सुहृदभूत्, स यथादर्शन वार्तालापकमात्रो बभूव । एकदा तस्य पुरोहितस्य कस्मिंश्चिदपराधे समागते भूपतिश्चण्डशासनस्त निग्रहीतुमैच्छत् । दीन पुरोधा राजाभिप्रायं विज्ञाय रात्रावेव सहमित्रनाममित्रस्य गृह ययौ । अद्य मे राजा रुष्ट इत्युक्त्वा पुरोहितस्तमुवाच ‘ हे मित्र ! त्वद्गृहेऽशुभामवस्था गमयामी ’ति । हे मित्र ! आपत्काले ह्युपस्थिते मित्रं ज्ञायते, तस्मात् त्व स्वगृहे मा गोपयित्वा मित्रता सफलीकुरु । ” तत· सहमित्र उवाच–“ हे मित्र ! आवयो सम्प्रति मैत्री न भवितुमर्हति, यावद्राजभय ते न तावदेव नौ मैत्री । मद्गृहे राजदूषितो वसस्त्व ममाप्यापदे स्या , ज्वलद्दूर्णमूर्णायु को नाम गृहे क्षिपेत् ? । अह त्वत्कृते सकुटुम्बमात्मान कथमनर्थे पातयिष्यामि, तस्मादन्यत्र याहि, तव कल्याणमस्तु ” एव सहमित्रेणानादृत सोमदत्त शीघ्र पर्वमित्रस्य गृह ययौ । तत्र स द्विजस्तदाश्रयमीप्सुस्तथैव राजकोपवृत्तान्तं न्यवेदयत् । पर्वमित्रोऽपि पर्वमैत्र्या निष्क्रयकाम्यया महाप्रतिपत्त्या त दृष्ट्वोवाच–“ हे सखे ! त्वयाऽनेकपर्वसु सभाषणादिभि स्नेहप्रकारैर्मत्प्राणा अपि क्रीता. हे भ्रातर्यदि तव दु खभागह न भवामि तदा मम कुलीनस्य कुलीनता नावतिष्ठते । त्वत्प्रेमाधीनोऽनर्थमपि सहे, किन्तु मे कुटुम्बमप्यनर्थं गच्छेदिति दु·सह प्रतिभाति । हे सखे ! कुटुम्बमपि मेऽतिप्रिय त्वमपि प्रेयानसि, अत्र किं करोमि ? इतो व्याघ्र इतस्तटी वर्तते । सकीटकपलाशवदह बालपरिवृतोऽस्मि, तस्मात्तेभ्यो बालेभ्योऽनुकम्पय । तव स्वस्त्यस्तु, त्वमन्यत्र याहि । ” एव सत्कृत्यापि तेन स पुरोधा दूरीकृतो निर्ययौ । यतो दैवे रुष्टे

पुत्रोऽपि शत्रूयते । चत्वरपर्यन्तमनुगम्य परावृत्त पर्वमित्र ।

अथ दुष्प्रापरोधा पुरोधा व्यसनवारिधिर्दध्यौ–"मया ययोरुपकृत तयो परिणामोऽयम्, तस्मात् कस्य सम्प्रति दीनोऽह पारिपार्श्विको भवामि । अथ प्रणाममित्रस्य मित्रस्य समीप यामि । तत्रापि मे प्रत्याशा नास्ति, यतस्तस्मिन् वाङ्मयी प्रीतिरस्ति, यद्वा वितर्केणालम्, सोऽपि किञ्चिन्मित्र वर्तते, तस्मात्तमपि पश्यामि, यत कस्यापि कोऽप्युपकारको भवति । इति प्रणाममित्रस्य गृह ययौ । सोऽभ्यागतमात्र त कृताञ्जलिरभ्युत्तस्थौ, उवाच च–"तव स्वागतमस्तु, युष्माक किमीदृशी दशा वर्तते' मया किं प्रयोजन कथय यदह ते करवाणि" तत पुरोहितो राजवृत्तान्तमाख्याय त प्रतीदमुवाच–'हे सखे ! अस्य राज सीमा त्यक्ष्यामि, मे सहायता कुरु ।" सोऽप्युवाच–"हे सखे ! प्रियालापै तवाहमृणी वर्ते, अधुना ते साहाय्य कृत्वाऽनृणी भविष्यामि । त्व मा भय कार्षी यतस्तेऽह पृष्ठरक्षकोऽस्मि । मयि जीवति सति तव रोम्णोऽपि विप्रिय कर्तुं न कोऽपि शक्नोति," इत्युक्त्वा प्रणाममित्र पृष्ठकृततूणीरोऽधिज्यीकृतचापो नि शङ्क त पुरोहितमग्रे चक्रे । पुरोधास्तेन सहेष्ट स्थान ययौ । तत्र नि शङ्को वैषयिक सुखमन्वभवत् । अत्र चायमुपसंहार"–तत्र जीव सोमदत्तसदृशोऽस्ति, सहमित्रमित्रस्य तुल्यो विग्रहो भवति, यतोऽय विग्रह सत्कृतोऽपि कर्मराजकृताया मरणापदि जीवेन सह मनागपि नागच्छति । सर्वे स्वजनबान्धवा पर्वमित्रसमाना ज्ञेया, यतस्तेऽखिला श्मशानचत्वर गत्वा निवर्तन्ते । शर्मनिबन्धन धर्मस्तु प्रणाम मित्रसदृशो ज्ञातव्य, यो धर्म परलोकेऽपि गच्छता जीवेन सह गच्छति । तस्माद् हे मनस्विनि ! अहमैहलौकिकसुखास्वादमूढ परलोकसुख धर्मं न त्यक्ष्यामि । ततो जयश्रीरुवाच–"हे नाथ ! बुद्धिमन् ! त्व कूटकथानकैर्मां नागश्रीवत् परं मोहयसि ।

## नागश्रीकथा ।

रमणीयनामपुरे कथाप्रियो राजाऽभूत् । स वार वारेण पौरेभ्य· प्रतिदिन कथां कथयामास । तस्मिन् पुर एको ब्राह्मणो दैन्यपीडित संपूर्णदिन ग्राम ग्राम कणभिक्षयाऽजीवत् । एकदा निरक्षरवरस्य तस्य विप्रस्य कथानकदिनमभूत् । स चेतसि चिन्तयामास— "स्वनामकथनेऽपि मम जिह्वा सन्निपातवती सदा स्खलति चेत्तदा कथाकथने कथ समर्था भविष्यति ? । यद्यह कथां कथयितु न जान इति वदामि तदाऽह कारागारे नीये, तत का गतिर्मे भविष्यति ? ।" तस्य विप्रस्य कुमारीकन्या त चिन्तितमुख दृष्ट्वा पप्रच्छ— "तव का चिन्ता ?" ततो विप्रश्चिन्ताकारण कथयामास । तत· कन्योवाच—"हे पितस्त्व चिन्ता मा कुथा, त्वद्वारेऽहं राजसमीप गत्वा कथा कथयिष्यामि" इति स्नात्वा श्वेतवस्त्र परिधाय राजसमीप गत्वा जयाशिष दत्त्वा सा राजानमुवाच—"राजस्त्वं कथा शृणु" । राजाऽपि कन्यायास्तादृशधार्ष्ट्येन विस्मितो मृग उच्चैर्गीतिमिव कथा श्रोतुमुत्कर्णो बभूव । साऽपि कथयितु प्रारेभे—"राजन् ! इहैव पुरे नागशर्माग्निहोत्री द्विजोऽस्ति । स च कणभिक्षैकजीविकोऽस्ति । तस्य सोमश्रीनाम्नी भार्याऽस्ति, तस्या कन्याऽहमस्मि, मम नाम नागश्रीरिति । अह क्रमेण यौवन प्राप्ताऽस्मि । अह पितृभ्या द्विजपुत्राय चट्टनाम्ने दत्ताऽस्मि, यतः स्त्रीणा वर सम्पदनुरूपो भवति । अन्यदा केनाप्यौद्वाहिकेन कार्येण मा गृह एकाकिनीं मुक्त्वा ग्रामन्तर ययतुर्मे पितरौ । मम पितरौ यस्मिन्नेव दिने ग्रामान्तरमगमताम्, तस्मिन्नेव दिने मद्वरो चट्टाख्यो विप्र आगात् । तदा पितरौ विनापि तस्य सम्पदनुसारेण स्नानभोजनादिभिरहमातिथ्यमकार्षम् । दिनात्यये तस्य शयनाय स्वगृहसर्वस्व खट्वाप्रस्तरणमेकमदाम् । ततो मयाऽचिन्ति—"यदस्य पर्यङ्क समर्पित, प्रसर्पत्सर्पाया गृहभूमौ कथमह शये ? । तद्भीताऽहमस्य शय्याया शये, गाढान्धकारावृतरात्रौ मा कोऽपि न द्रक्ष्यति । " इति निर्विकारेण मनसा तत्रैवाहमस्वाप्सम्, ततश्चट्टो

विप्रो मदङ्गस्पर्शेन कामातुरोऽभूत् । लज्जया क्षोभेण विषयनिरोधेन च तस्य सद्य शूलरोग उदपद्यत । स तु तेन पञ्चत्व प्राप । त गतप्राण दृष्ट्वा भीताऽहमचिन्तयम्–" अय द्विजो मम पापाया दोषेण मृत्यु प्राप अद्य कस्य कथयामि, अत्र क उपाय ? किं करोमि ? अहमेकाकिनी त गृहात् कथ नि सारयामि ? इत्यह तद्वपु कूष्माण्डमिव खण्डशोऽकार्षम् । गर्तं खनित्वा तत्रैव निधानमिव त न्यधाम् । त गर्तं पूरयित्वोपरि समतल कृत्वाऽमार्जयमलिंप च यथा हि तत् केनापि न ज्ञायते । तत्स्थान पुष्पगन्धधूपैर्वासित मया । अधुना मम पितरौ ग्रामान्तरादागतौ स्त । राजाप्युवाच–" हे कुमारि ! यदिद त्वया कथित तत्सर्वमपि किं सत्यमस्ति ? " तत सा पुनरुवाच– " हे राजन् ? त्व यानि कथानकानि शृणोषि तानि यदि सत्यानि तदा मयोक्तमप्येतत्सर्वं सत्यम् ? "

हे नाथ ! नागश्रिया यथैव राजा विस्मापितस्तथा त्वमपि मा कल्पितकथानकै किं प्रतारयसि !, जम्बूरूचे–हे सर्वा प्रिया ! अह ललिताङ्गवद् विषयलोलुपो नास्मि,

## ललिताङ्गकथा ।

वसन्तपुरं नाम नगरमस्ति । तत्र विभ्रविमानिन्द्र इवाज्ञया कन्दर्प इव रूपवान् शतायुधो नाम राजाऽभूत् । तस्य ललिताकृतिर्देवीव ललितानाम्नी भार्या बभूव । सा सकलकलापूर्णाऽभूत् । सैकदा स्वनयने विनोदयितु मत्तवारणमारुह्याध संचरन्त जन द्रष्टुमारेभे, विशालेन सुन्दरेण धम्मिल्लेन द्विमस्तकमिव कस्तूरीपङ्किलश्मश्रु समद गजमिव वृषस्कन्ध विशालवक्षसं कमलतुल्यकरचरण जात्यस्वर्णभूषितग्रीवा पाणिपाद कर्पूरपूर्णताम्बूलस्फुरन्मुखसुगन्धि कामविजयपताकोपम तिलकशोभितललाटमङ्गरागव्याजेन मूर्तमिव लावण्य बिभ्रतम्, घूर्णायित वक्षसुगन्धमेदुरीकृतपथ वपु श्रिया लक्ष्मीदेव्या द्वितीयपुत्रमिव मार्गे गच्छन्त युवान कचन पुरुष साऽपश्यत् । तद्रूपदर्शनोन्मत्तनयना

सुनयना सा स्तब्धा तद्गतचित्ता चित्रलिखितैवाभूत् । सैव दध्यौ—“ यद्ययं पुमान् परस्परबाहुलताबन्धसुन्दरमालिङ्गेत मया तदा मे स्त्रीजन्म सफलं भवेत् । यद्यहं पक्षिणी स्यां तदा स्वयं दूतीभूयोड्डीय गत्वाऽमुं भजे ।

ततस्तत्पार्श्वस्थैका चतुरा चेटी दध्यौ—“मम स्वामिन्या दृष्टिर्नूनमस्मिन् यूनि पुंसि रमते”। ऊचे च—“ हे स्वामिनि! तव मानसमत्र यूनि रमते ? अत्र नाश्चर्यं, कस्य नेत्रे चन्द्रो नाऽऽनन्दयति ? ललितोवाच—हे बुद्धिमति! साधु साधु त्वं मनोज्ञाऽसि । यद्यहमिमं मनोहरं नरं भजे तदा जीवामि । अयं कोऽस्तीति तावन्मां ज्ञापय । ततस्तथा कुरु, यथा सङ्गमय्यामुं मे वपुः निर्वापयसि ।” सा चेटी गत्वा तत्स्वरूपं ज्ञात्वा च धैर्यपूर्वकं शीघ्रं राज्ञ्यै व्यजिज्ञपत्—“ हे स्वामिनि ! अत्रैव वास्तव्यो ललिताङ्गनामाऽयं समुद्रप्रियनाम्नः सार्थवाहस्य पुत्रोऽस्ति । अयं सौभाग्यकामदेवो द्वासप्ततिकलावान् कुलीनो युवा चेति सुपात्रे ते मनो रमते । अस्याऽऽकृत्यनुसारेण गुणानपि निश्चिनु । लोकेऽपि ‘यत्राऽऽकृतिस्तत्र गुणा वसन्ति’ इति गीयते । यथा त्वं नारीष्वेका गुणवत्यसि तथाऽयमपि नरेषु । तस्माद् द्वयोर्गुणिनोर्योगं घटयामि, मां समादिश । ” एवं कुर्विति राज्ञ्युवाच । तदर्थं तस्या हस्ते प्रेमाङ्कुरमेघजलश्लोकाङ्कं लेखमर्पयामास ।

सा दास्यपि दूतीकर्मकुशला शीघ्रं गत्वा ललितोक्तवाचिकं ललिताङ्गाय न्यवेदयत् । तद्गिरसाया ललिताङ्ग चटूक्तिभिः प्रवर्त्य तन्मनः प्रसादयितुं तं लेखमदात् । स सद्यः पुष्पवान् कदम्ब इव उद्यत्पुलकः प्रेमप्रकाशकं तं लेखं वाचयामास । तद्यथा—

हे सुभग ! यदवधि त्वामपश्यं तदादि वराकी त्वन्मयं सर्वं पश्यामि, तस्मान्मां स्वयोगेनानुगृहाण । स इति तं लेखं वाचयित्वाऽवदत्—“ हे चतुरे ! साऽन्तःपुरवासिनी क ?, अहं वणिग्मात्रं क ?, कथं नौ योगः संभाव्यते ?, न ह्येतद् हृदि धर्तुं शक्यते, म्रियते चेत्तर्हि वक्तुं न शक्यते, यद्राजभार्यया रस्ये । यदि भूमिस्थेन चन्द्रकला स्प्रष्टुं शक्यते, तदा राजपत्न्यप्यन्यपुरुषैर्भोक्तुं शक्यते । ” दास्युवाच—

" असहायस्य सर्वमपि दुष्करम्, तव त्वह सहायाऽस्मि, अतो हे सुन्दर ! चिन्ता मा कृथा, त्व मद्बुद्ध्याऽन्त पुरमध्येऽपि पुष्पमध्ये स्थित इव संचरिष्यसि । भयेनालम् " समये मामाह्वयेरिति तेनोक्ता चेटी सद्यो गत्वा हर्षोच्छ्वसद्भुवे राज्यै तदुवाच—

तत्प्रभृति तत्सङ्गम चिन्तयन्त्या ललिताया एकदा तत्र पुरे सुन्दर कौमुद्युत्सवोऽभूत् । तदा राजा शस्यप्रशस्यक्षेत्राया क्षीरधवल सरोजलाया बहिर्भुव्याखेटकलीलया ययौ । तदा परितो विजनीभूते राजवेश्मनि ललिता तयैव दास्या ललिताङ्गमाह्वयत् । सा चेटी राज्या विनोदमुद्दिश्य नवयक्षप्रतिमाच्छलेन त नरमन्त पुरे प्रावेशयत् । ललिता ललिताङ्गश्च तावुभौ चिराज्जातसङ्गमौ लतावृक्षाविव परस्परं गाढमालिलिङ्गतु । ततोऽनुमानादिकुशला अन्त पुरपालका निश्चित कस्यचित्पुरुषस्य प्रवेशोऽन्त पुरेऽभूदित्यज्ञासिषु । अहो वय वञ्चिता स्म, इति तेषां चिन्तयतां राजाऽऽखेटकक्रीडा समाप्याऽऽययौ । ते राज्ञे निष्कपटमज्ञापयन्—" हे राजन् ! अस्माकमाशङ्कयमस्ति यद् त पुरे कोऽपि परपुरुष प्रविष्टोऽस्ति । तस्माद् राजोपानहौ शब्दायमाने विहाय नि शब्दपादन्यासपूर्वक चौर इव शुद्धान्ते प्रविवेश । सा चेटी द्वारदत्तदृष्टिर्दूरादागच्छन्त राजान दृष्ट्वा राज्य ज्ञापयाञ्चकार । दासी राज्ञी च त जारमुपरितनमार्गेणावकरराशिमिव शीघ्र बहि-र्निक्षिपतु । स जारो गृहात् पश्चाद्घनप्रदेशे महावटे पपात । ततो गुहायामुलूक इव निलीय स तत्रैवास्थात् । दुर्गन्धिमयेऽशुचौ तत्र कूपे नरकावास इव पूर्वसुख स्मरन्नेवातिष्ठत, सोऽचिन्तयच्च—" यदि कथचिदस्मात् कूपादह नि सरिष्यामि तदाऽहमीदृशपरिणामभोग न करिष्यामि । " दासी राज्ञी च तत्र कूपे स्थिताय तस्मै कृपयोच्छिष्ट चिक्षिपतु, तेनैव स जारोऽजीवत् । ततो वर्षासमये समागते गृहप्रस्रवणजलेन स कूप पातकेन दुष्टधीरिव पूर्णोऽभूत् । स तेन परमवेगेन जलेन शववद् वाहयित्वा वप्रद्वारिकया बाह्यपरिखाया मनीयत, स जलपूरेण महदलाबुफलमिवाऽऽन्दोल्य परिखातीरेऽक्षेपि । तत स जलेनार्तो मुमूर्छ । दैवात् कुलदेवतयेवाऽऽगतया

धात्र्या दृष्टः सगोप्य गृहे नीतश्च । स कुटुम्बेन स्नानाभ्यङ्गभोजनादिभिः पाल्यमानश्छिन्नप्ररूढवृक्ष इव पुनर्नवीनोऽभूत् ।

अत्रायमुपनयः—यथा हि ललिताङ्ग कामभोगेषु समासक्तस्तथा देहिना जीवः । यथा राज्ञीभोगस्तथा वैषयिकं सुखम्, तदापातमधुर परिणामातिदु.खदम् । गर्भः कूपवाससमानः; मातृभुक्तान्नपानाद्यैर्यद् गर्भपोषण तदुच्छिष्टभोजनसदृशम् । यो मेघजलपूरिताद् विष्ठाकूपात् खालेन निर्गमः स पुद्गलोपचिताद् गर्भाद् योनितो निर्गम । प्राकाराद्बहिस्थे परिखोत्सङ्गे यत् पतन तत् सूतिकागृहे गर्भवासात् पतनम् । जलपूर्णपरिखातटस्थस्य या मूर्च्छा सा जरायुशोणितमयात् कोशाद् बहि स्थस्य मूर्च्छा । या देहपालिका धात्री सा कर्मपरिणामसन्ततिस्त्वया ज्ञातव्या । हे प्रिया. ! यदि राज्ञी ललिताङ्गरूपमोहिता सती त चेटीद्वाराऽन्तःपुरं पुन. प्रवेशयेत्तदा ललिताङ्गः किं तत्र प्रविशेत् ? । ” पत्न्य ऊचुः—“ सोऽल्पधीरपि कथमनुभूत विष्ठागर्तपातज दुःख स्मरन् राज्ञोऽन्तःपुर प्रविशेत् ? । ” ततो जम्बूरुवाच—“ हे प्रिया ! सोऽज्ञानवशेन प्रविशेदपि, अह तु गर्भसक्रान्तिहेतु नाऽऽश्रयिष्यामि । ”

अथ जम्बूस्त्रियो विज्ञातदृढनिर्णयाः प्रतिबुद्धाः क्षमयित्वैव जगदुः—“ हे नाथ ! त्व स्वयं यथा निस्तरसि तथाऽस्मानपि भवान्निस्तारय, यतो महाशया आत्मकुक्षिम्भरित्वेन न सतुष्यन्ति । ” ततो जम्बूनाम्नः पितरौ श्वशुरा बान्धवाश्चोचुः—“ हे जम्बूः ! त्वं साधूक्तधर्माऽसि, अत. परमस्माक परिव्रज्या भवतु ।

## जम्बूप्रभवयोः प्रव्रज्या ।

ततः प्रभवनामकश्चौरोऽप्युवाच—“ हे मित्र ! अहमपि शीघ्र पितृनापृच्छ्य तव परिव्रज्यासहायो भविष्यामीह न सदेहः ” । “ हे सखे ! तवाविघ्नमस्तु, प्रतिबन्ध मा कृथाः ” इति जम्बूकुमारोऽपि प्रभव चौर प्रत्युवाच । ततो महामना जम्बूकुमार. प्रात.कालेऽभिनिष्क्रमणोत्सवं

स्वयमुपेक्षकार । कल्पवित् स स्नात्वा सर्वाङ्गीण चाङ्गराग कृत्वा रत्नमयानलङ्कारान् दधौ, अय कल्पोऽस्तीति ।

अथानादृतेन देवेन कृतमन्निधिर्जम्बूर्नरसहस्रेणोद्वाह्यां शिबिकामारुरोह । निनद मङ्गलवाद्य पठन्मङ्गलपाठक उत्तार्यमाणलवण स्वकीयमानमङ्गल कल्पतरुरिव विश्वजनहित दान कुर्वाणो लोकै प्रशस्यमान काश्यपगोत्रजातो जम्बू सुधर्मस्वामिगणधरचरण कमलपूत कल्याणसम्पदास्पद त वनोद्देश जगाम । स निर्ममो गणधरशोभिताऽऽरामद्वारदेशे संसारादिव शिबिकामध्यादुत्ततार । तत्रा ऽऽपदम्बुधितारकान् सुधर्मस्वामिपादान् पञ्चाङ्गस्पृष्टभूपृष्ठ सन् गणधरतो दीक्षामिच्छुर्व्यजिज्ञपत्–" हे परमेश्वर ! भवसागरतरीं प्रव्रज्यां मम सस्वजनस्याप्यनुकम्प्य देहि " तदा प्रथमगणधरोऽप्येव प्रार्थित सपरिवाराय तस्मै यथाविधि दीक्षा ददौ । अन्येद्यु प्रभवोऽपि पितृनापृच्छ्य तत्र समागतो जम्बूकुमारमनुगच्छन् परिव्रज्यामग्रहीत् । स प्रभव श्रीजम्बूस्वामिचरणकमलमरालोऽभवत् । यतो गुरुणा तस्यैव शिष्यत्वेन समर्पित । ततो जम्बूमुनि श्रीसुधर्मस्वामिगणधरपादारविन्दमिलिन्द दु सहान् परीषहानगणयन् पृथिवीं व्यहार्षीत् ।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपरिशिष्टपर्वण श्रीतपोगच्छाधिपति-
शासनसम्राट्–सूरिचक्रचक्रवर्ति–आचार्यवर्य–श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ–शान्तमूर्ति–आचार्यश्री
विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि–प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न
–व्याख्यानवाचस्पति पन्न्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते
गद्यानुबन्धे स्थविरकथाविलसिताङ्गकथापर्यन्त–सपरिवारश्रीजम्बूप्रभव
प्रव्रज्यावर्णनात्मकस्तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः

### सुधर्मस्वामिगणधरस्य चम्पायामागमनम् ।

एकदा गणधरः श्रीसुधर्मा जम्बूस्वाम्यादिशिष्ययुतो भुवि विहरंश्चम्पानगरीं जगाम । उद्भूतधर्मकल्पतरुसमः परमेश्वरो गणधरः स नगरपरिसरारामे समवासरत् । ततस्तं वन्दितुं नगरलोका भक्त्या हर्षितहृदया गन्तुं प्रावृतन् । झणझणशब्दयुतनूपुरा काश्चित् नार्यः पादचारेण श्लथधम्मिल्लस्थपुष्पमाल्याः जग्मु । काश्चिच्च नार्य. पतिभि. सह रथमारुह्य शीघ्र शीघ्रं रथान् चालयामासु । काश्चिच्छ्राविकास्त्यक्तान्यकर्माणो कपियुतवृक्षा इव कट्यारोपितबाला गृहान्निर्जग्मु । केऽपि महेभ्याश्चलत्कुण्डला अश्वारूढा धवलच्छत्रैर्दिवं पुण्डरीकिणीं कुर्वाणा निर्जग्मुः । शीघ्रं गच्छता श्रीमता परस्परसङ्घर्षताडनान्निपतितैर्हारमुक्ताफलैर्मार्गभूमिर्दन्तुराऽभूत् । तदा तस्या नगर्या कूणिको नाम राजा गच्छतो लोकान् दृष्ट्वा वेत्रधरं पप्रच्छ—

### कूणिकनृपस्य वदनार्थं गमनम् ।

" अद्य किं कस्याश्चिद्देव्या यात्रा पुरसमीपे वर्तते ? कस्यापि वा महाश्रेष्ठिन उद्यापनिकोत्सवोऽस्ति ?, किं कौमुदीसमानः कोऽपि महानुत्सवः समागतः ?, अथवोद्यानचैत्ये पूजाविशेषो वर्तते ?, किंवा कोऽपि महात्मा जैनमुनि समागमत् ? यदेषोऽखिलनगरीजनः शीघ्रं गच्छति । " तदैव वेत्रधारी विज्ञाय तद्वृत्तं राजान व्यजिज्ञपत्—" हे राजन् ! इह श्रीसुधर्मस्वामी गणधरवरः समवसृतो विराजते, अयं सर्वः पुरजनस्तत्पदान् वन्दितुं याति, तवैकातपत्रार्हद्धर्मराज्यं विजयते । " राजोवाच—" हे वेत्रिन् ! अयं पुरजनो धन्योऽस्ति, यः श्रीसुधर्मस्वामिवन्दने एवं त्वरते । अहो अहं जाग्रदवस्थोऽपि सुषुप्तावस्थतां प्रापम्, यतोऽहं गणधरदेवमपि नाज्ञासिषम्, तस्मादह-

अपि गणभृच्चरणान् शीघ्रं गत्वा वन्दे, यतस्ते पवनवद् अप्रतिबद्धा एकत्र न तिष्ठन्ति, इति प्रफुल्लकमललोचनो राजोत्थाय चन्द्रकिरणैरिव निर्मिते धवलवस्त्रे पर्यधात्। अथ कर्णतलयो स्वच्छमुक्ताकिरणसमूहपूरिते सुधाकुण्डे इव मौक्तिककुण्डले दधौ। पुनर्हृदये लावण्यनदी तीरस्थां फेनरेखामिव विमलमौक्तिक हारमालम्बयामास। भूभारधरोऽपरकल्पवृक्ष इव स राजाऽन्यान्यपि सर्वाङ्गरत्नालङ्करणानि बभार। पवनचञ्चलस्खलमाकाशस्फटिकधवल तत्स्पर्शानुभूयन्तमिव चोलक पर्यधात्। सुगन्धिपुष्पमाल्यगर्भित कज्जलकान्ति अस्तचन्द्रवर्षर्तु मेघसम धम्मिल्ल मस्तके बबन्ध। शत्रुवारण स राजा भद्रकारण भद्रवारण सिंह इव पर्वत निश्रेणित आरोहत्। स भूमिवासवो गगने विद्युल्लेखामिव कराभ्यां सृणिं नर्तयन् पादाभ्यां हस्तिनं प्रेरयामास। मम निर्भरे पादघाते पृथ्वी भङ्गुरा माभूदिति स हस्ती कृपयेव मन्दं मन्दं गन्तुं प्रचक्रमे। ऊर्जितं गर्जन् मदजलं निरन्तरं वर्षन् स हस्ती जनेन भूमिगतो मेघ इवालक्षि। तथाऽऽरूढसादिनो नृत्यन्त इव वल्गन्तो मुखाग्रस्थप्रस्थानवो लक्षशोऽश्वास्तं गजं प्रावतु। तत्पुरो विजयसूचकानि तूर्यशतान्यनेकशो तदायुक्तैः पुरुषैः परस्परं संवलितशब्दमवाद्यन्त। तूर्याणाममित प्रतिध्वनिभिरपौरुषेय शब्दायमानमुद्दाम वाद्यान्तरं नभोऽभवत्।

अथ सपरिच्छदो राजा श्रीसुधर्मस्वामिगणधरचरणकमलशोभित वनोद्देश प्राप। राजशिरोमणि कुम्भोपरि सृणिदण्डप्रहारेण उपवेशिताद् गजात् रज्जु गृहीत्वाऽवततार। त्यक्तपादुको दूरीकृतच्छत्रचामरो महाभुजो भूपो वेत्रिधात्रुमपि विहाय मन्दारूढावकान् पश्यन् उपद्रोमाञ्चकञ्चुक स्व भक्त्या साधारणजनसम मन्यमान श्रीसुधर्मस्वामिन दृष्ट्वा बद्धेनाञ्जलिना मुकुटोपरि मुकुटीकुर्वाण दूरादपि ववन्दे। भक्ताग्रगण्यो राजा त नत्वा तत्पुरतस्तन्मुखदत्तदृष्टिस्तच्छिष्यपरमाणुरिवोपविवेश। तत प्राणिकारुणिको गणधर श्रोतृश्रोत्रामृतप्रपा धर्मदेशनामकरोत्। देशनावसाने गणभृच्छिष्यान् पश्यन् राजा जम्बूस्वामिनमुद्दिश्य परमेश्वरं पप्रच्छ—“ हे भगवन्!

एतस्य महर्षे रूप सौभाग्यं तेजश्च सर्वमप्यद्भुतं दृश्यते; तथाहि—

अस्य केशा यमुनातरङ्गकुटिलश्यामलाः, नेत्रे श्रवणान्तविश्रान्ते, नासा नालकमले इव, श्रवणे नेत्रसरस्तीरस्थे शुक्तिके इव, कण्ठः कम्बुसम , वक्षस्थल कपाटोपमम्, बाहुदण्डौ सरलावाजानुलम्बिनौ दीर्घौ, मध्यदेशो मुष्टिग्राह्यः, जानुयुगलं गजबन्धनकाष्ठमिव, जङ्घे हरिणीजङ्घासमे, पाणिपादं कमलमिव । एतस्य रूपसम्पदं मादृशो वक्तुं किं शक्नोति ? । अस्य महाभागस्य सौभाग्य वाग्गोचरता नैति, यदेन बन्धुवत् पश्यतो मे मनः प्रीयते । अय महातेजाः कोऽस्ति ?, तथा तेजसाऽस्य यादृशं रूपमस्ति तद् द्रष्टुं न शक्यते । अस्य महामुनेरधृष्य चाभिगर्म्यं च तेजः, किं सूर्याचन्द्रमसोस्तेज एकत्राऽऽकृष्य पिण्डीकृतम् ? । अस्य तपोनिधेस्तेजःपुञ्जः कियत् कथ्यते, यत्पादनखकिरणानामपि विद्युद् दासीव लक्ष्यते ।" श्रीज्ञातपुत्रो यथा पुरा श्रेणिकायाऽऽचष्टे तथा सुधर्मस्वामी जम्बूप्राग्भववृत्तान्तमस्मै जगाद । इत्युक्त्वोवाच—"राजन् ! पूर्वजन्मतपसाऽस्यैतादृशानि रूपसौभाग्यतेजांसीक्ष्यन्ते"। स एव परमेश्वर उवाच—"राजन् ! अयमन्तिमशरीरश्चरमश्च केवली वर्तते । अस्मिन्नेव भवे सेत्स्यति" । पुनः सुधर्मस्वामिनेदमुक्तम्—"जम्बूनाम्नि शिवं गते मनःपर्यायो न भावी, परमावधिश्च न भावी, आहारकवपुर्लब्धिर्न, तथा जिनकल्पो न, पुलाकलब्धिर्न, क्षपकश्रेणिरोहणं न, तथा क्वचिदपि उपरितनं सयमत्रयं न, एवमग्रेऽपि हीनहीनतरर्द्धिता भविष्यति ।" राजैवं श्रीसुधर्मस्वामिवचनं श्रुत्वा तच्चरणकमले वन्दित्वा चम्पापुरीं ययौ । सुधर्मोऽपि सपरिच्छदस्तत्स्थानाच्छ्रीमहावीरप्रभुपादान्तिके जगाम, तत्सम च विजहार ।

## जम्बूस्वामिनः केवलज्ञानं निर्वाणं च ।

श्रीसुधर्मस्वामिना पञ्चाशदब्देन व्रतं गृहीतम् । चरमार्हतः शुश्रूषा त्रिंशदब्दीं चक्रे । श्रीमहावीरे मोक्ष गते गणधरवरः श्रीसुधर्म-

स्वामी छद्मस्थः सन् द्वादश वर्षाणि तीर्थं प्रवर्तयंस्तस्थौ । ततो ज्ञानवल्लब्धीप्रान्ते प्राप्तकेवलो भव्यप्राणिनो बोधयन्नष्टवर्षी पृथिवीं विजहार । निर्वाणसमये प्राप्ते सति पूर्णवर्षशतायुषा श्रीसुधर्मस्वामिना श्रीजम्बूस्वामी गणाधिपोऽस्थापि । तीव्र तपस्तप्यमानो जम्बूस्वाम्यपि केवलं लब्ध्वा सद्यो भव्यभविकान् प्रतिबोधयामास । श्रीमहावीरस्वामिमोक्षदिनादपि चतुःषष्टिवर्षाणि व्यतीत्य जम्बूस्वामी कात्यायनगोत्रं श्रीप्रभवं स्वपदे संस्थाप्य कर्मनिर्जरयाऽव्ययपदमाप ।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यैर्विरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप परिशिष्टपर्वण श्रीतपोगच्छाधिपति-शासनसम्राट्-सूरिचक्रचक्रवर्ति-आचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमर्थ-शान्तमूर्ति-आचार्यश्री विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि-प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न-व्याख्यानवाचस्पति-पन्न्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते गद्यानुबन्धे जम्बूस्वामिनो निर्वाण-वर्णनात्मकश्चतुर्थः सर्गः ॥ ४ ॥



# पञ्चमः सर्गः ५

## श्रीशय्यंभवसूरिवृतान्तः ।

ततः कात्यायनगोत्रोत्पन्नः श्रीप्रभवस्वामी तीर्थप्रभावना कुर्वन् पृथिवीतलं पवित्रीचकार। एकदा निशीथे आवश्यकक्रियाश्रान्तायां सुप्तायां शिष्यपर्षदि योगनिद्रास्थः श्रीप्रभवस्वाम्येवं चिन्तयामास "अर्हद्धर्मकमलदिवाकरो मे गणधरः को भावी, यः सङ्घस्य भवसागरे पोतसमः स्यात्।" एतच्चिन्ताऽऽक्रान्तः स स्वे गणे सङ्घे चेष्टज्ञेयालोकप्रदीपकमुपयोगं चकार। स ज्ञानसूर्येण प्रसारिणा सूर्यतेजसेवाव्युच्छित्तिकरं तादृशं नरं कमपि न ददर्श। तादृग्नरार्थी स परेषामपि दर्शने उपयोगं ददौ। यतः पङ्कादपि कमलमुपादेयं भवति। ततो राजगृहनगरे यज्ञं कुर्वाणमासन्नभव्यं वत्सगोत्रजं शय्यम्भवनामकं ब्राह्मणं ददर्श। अनवस्थितैः श्रमणैरन्यत्रापि विहरणीयमिति प्रभवस्वामी तत्रैव नगरे पुरवरे जगाम। तत्र द्वौ मुनी आदिशत्–"यज्ञशालायां गम्यताम्, तत्र युवां भिक्षार्थिनौ धर्मलाभाशिषं वदतम्। तत्र भिक्षाऽदानेच्छावादिभिर्यज्ञवाटद्विजादिभिः प्रस्थाप्यमानाभ्यामपि युवाभ्यामीदृशं वक्तव्यम्–"अहो कष्टम्–अहो कष्टम्, तत्त्वं विज्ञायते नहि। अहो कष्टमहो कष्टं, तत्त्वं विज्ञायते नहि।"

अथ वन्दनमालाङ्कद्वारमुत्तम्भितध्वजं द्वारदेशमुक्ताऽऽचामनाहावमिन्धनव्यापृतमाणवं यूपस्तम्भबद्धच्छागं वेदीमध्यप्रदीप्तवह्निकं होमद्रव्यपूर्णानेकपात्रमृत्विग्गणावृतं सामिधेन्यर्पणतत्पराध्वर्युं यज्ञवाटं गुर्वनुज्ञातौ तौ मुनी जग्मतुः।

अथ तौ मुनी भिक्षामदित्सुभिर्विप्रैर्विसृष्टौ गुरूपदिष्टमहो कष्टमित्यादि तारस्वरेण पेठतुः। तस्मिन् यज्ञे दीक्षितः शय्यम्भवाख्यो द्विजो यज्ञवाटद्वारदेशस्थितः तयोर्वचनमिदं शुश्राव। सोऽचिन्तयच्च–"इमे साधव उपशमप्रधानाः सन्तीति मिथ्यावादिनो नेति मे मनस्तत्त्वे

संशेते " इति संदेहदोलारूढेन मनसा सुधीवर स किं तत्त्वमित्युपाध्याय पप्रच्छ । तत उपाध्यायस्तत्रमुवाच–स्वर्गमोक्षदा वेदास्तत्त्वम्, वेदेभ्योऽन्यद् तत्त्व नास्तीति तत्त्वज्ञा विदु । ततः शय्यम्भवोऽवोचत्–" यज्ञादिदक्षिणालोभाद्वेदास्तत्त्वमिति वदस्त्व मादृशान् नून प्रतारयसि । एते महर्षयो वीतद्वेषा वीतरागा निर्ममा निष्परिग्रहा शान्ताश्चेति कदाचिन्मिथ्या न वदन्ति । त्व गुरुर्नासि, यत एत द्विश्वमावन्म त्वया वञ्चितम्, हे दुराशय ! प्रत्युत त्वमद्य शिक्षणीयोऽसि । भो एवस्थितेऽपि यथास्थित तत्त्व प्रतिपादय, नो चेदद्य शिर श्छेत्स्यामि, दुष्टनिग्रहे हत्या न दोषाय " इति स कोपात् खड्गमाचकर्ष । तत स उपाध्यायमृत्युवाचनायाधपत्र साक्षाद्यम इवालक्ष्यत । उपाध्यायोऽपीद दध्यौ–' एष मां जिघांसुरस्ति, अतो यथास्थिततत्त्वकथनेऽय समय उपस्थित । इदमस्माक वेदेष्वपि पठ्यते, तथाऽस्माकमाम्नायोऽप्ययम्,–" कथ्य यथातथ तत्त्व, शिरच्छेदे हि नान्यथा " तस्मादस्मै यथातथ तत्त्व शीघ्र प्रकाशयामि, यथाऽह जीवामि, यतो–" जीवन्नरो भद्राणि पश्यति । " इति स्वमद्र ध्यायन्नुपाध्यायः प्रोवाच–" अस्य यूपस्याधस्तादर्हतः प्रतिमा न्यस्ता वर्तते । अत्राध स्थितैवार्हत प्रतिमा प्रच्छन्न पूज्यते । तत्प्रभावेणास्माकमिद यज्ञादिकर्म निर्विघ्न संपद्यते । अर्हत्प्रतिमां विना महातपा सिद्धपुत्र परमार्हतो नारदो यज्ञमवश्य विनाशयति । तत उपाध्यायो यूपमुत्पाट्य यथास्थिता तामर्हत्प्रतिमां दर्शयित्वेदमुवाच–" यस्य श्रीमदर्हत इय प्रतिमा तत्कथितो धर्मस्तत्त्वम्, यज्ञादि तु विडम्बना वर्तते । श्रीमदर्हत्प्रणीतो जीवदयारूपो धर्म, पशुहिंसात्मके यज्ञे का धर्म सम्भावना ! एव वय महीयसा दम्भेन जीवाम । त्व तत्त्व विद्धि । मा मुह्य, त्व परमार्हतो भव । मया स्वोदरपूर्तये चिरं प्रतारितोऽसि । हेऽनघ ! अत पर तवोपाध्यायोऽह नास्मि ।

शय्यम्भवोऽपि त यज्ञोपाध्याय प्रणम्योवाच–त्व मम यथार्थतत्त्वप्रकाशनादुपाध्यायोऽस्येव, इति परमसन्तुष्ट शय्यम्भवस्तस्मै स्वर्ण

ताम्रपात्रादियज्ञोपकरणं ददौ। स्वयं तौ महर्षी गवेषयन् शीघ्र निर्जगाम । तत्पदैरेव श्रीप्रभवस्वामिसमीपं ययौ । स प्रभवस्वामिपादान् सर्वान् मुनींश्च ववन्दे। तैश्च धर्मलाभाऽऽशिषाऽभिनन्दितः स उपाविशत् । कृताञ्जलि शय्यम्भवः श्रीप्रभवस्वाम्याचार्यचरणानिद व्यजिज्ञपत्—"भवन्तो मे मोक्षहेतुं धर्मतत्त्व कथयन्तु ।" प्रभवस्वाम्युवाच—"आदिमो धर्मोऽहिंसा, यथाऽऽत्मनि तथाऽपरस्मिन्नपि शुभोदर्कश्चिन्तनीयः । यत् प्रिय मितं तथ्यं परस्यावाधक तद् वाच्य, यत परबाधा भवेत्तत् तथ्यमपि न वक्तव्यम् । अदत्तमर्थं न गृह्णीयान्नित्यं सन्तुष्येत् । सन्तोषी जनो मोक्षसुखभागिवास्मिन्नपि लोके सुखी। सर्वतो मैथुनं त्यजन् प्राज्ञ ऊर्ध्वरेता भवेत्। मैथुनं त्वत्र ससारविषवृक्षस्य दोहद । सर्वपरिग्रह मुक्त्वा स्वशरीरेऽपि निःस्पृहो विद्वान् यद्यपुनर्भवमिच्छेदात्मारामो भवेत्, अहिंसासूनृतास्तेयब्रह्मचर्याकिञ्चन्य-[अपरिग्रह]रूपै. पञ्चभिर्व्रतैर्भवादात्मानमुद्धरेत् ।

शय्यम्भवस्तत्त्व ज्ञात्वा सद्यो भवोद्विग्नोऽभूत् । तत स प्रभवस्वामिपादान् नत्वैव विज्ञपयाञ्चकार । ममासद्गुरुवचनेनातत्त्वे तत्त्वबुद्धिश्चिरमभूत्। यतः पीतोन्मत्तो मृत्पिण्डमपि स्वर्णमेव पश्यति, तस्माज्ज्ञाततत्त्वस्य मे भवकूपे निपततो हस्तावलम्बनसमा दीक्षा दीयताम्। ततः प्रभवस्वामी ससारशत्रुभीतं त शय्यम्भवद्विजोत्तम परिव्राजयामास । स महाशयस्तपस्यन् परीषहेभ्यो नाभैषीत्, प्रत्युत दिष्ट्या कर्म क्षिपामीति परमोत्साही बभूव । स तुर्यषष्ठाष्टमादीनि दुष्कराणि तपासि तपनवत्तेजोभिरतिभासुरस्तेपेतराम्। स गुरुशुश्रूषां कुर्वाणो गुरुप्रसादतः क्रमेण चतुर्दशपूर्वधरोऽभूत्। ततः प्रभवस्वामी श्रुतज्ञानादिना स्वतुल्य रूपान्तरमिव त स्वपदे सस्थाप्य परलोकं साधयामास।

शय्यम्भवो यदा पर्यव्राजीत्तदा सर्वो लोकस्तत्पत्नीं युवतिं दृष्ट्वाऽनुशोचन्निदमुवाच—"अहो शय्यम्भवो भट्टो निष्ठुरशिरोमणिः, य स्वा भार्यां युवतिं सुशीलामपि तत्याज, स्त्रीगण पतिं विना पुत्राशयैव जीवति, अस्याः पुत्रोऽपि नाजनि, तत्कथमियं निर्वक्ष्यति ।"

लोकस्तामपृच्छत्—" हे शय्यम्भवप्रिये ! तवोदरे काऽपि गर्भसम्भावनाऽस्ति ? । साऽपि ' मनाक् ' इति कथनीये " मणय " इति प्राकृतभाषया जगाद । तदा हि साऽल्पगर्भाऽऽसीत् । तस्या गर्भं प्रत्याशेव शनैः शनैर्ववृधे । पूर्णे समये तन्मानससमुद्रचन्द्रः पुत्रोऽजनि । तदानीं ब्राह्मण्या ' मणय ' इत्युत्तरं कृतमिति तस्यापि सुतस्य नाम ' मणक ' इत्यभूत् । स्वय मात्रा स्वय धात्र्या ब्राह्मण्या पाल्यमान स बालकः क्रमेण पादचङ्क्रमणसमर्थो बभूव । सोऽतीतेऽष्टमवर्षे मातरं पप्रच्छ—" हे मातर्मम पिता क न नामास्ति ? । यतस्त्व वैषेणाविध वाऽसि " माताऽपि कथयामास—" हेऽर्भक ! तव पिता यदा प्रवव्राज तदा त्वमुदरस्थ आसी । मया पालितोऽसि । हे आयुष्मन् ! त्व यथाऽदृष्टपूर्वी पितरमसि, तथा तव पिताऽपि त्वामदृष्टपूर्वी विद्यते किल । तव पिता याज्ञिक शय्यम्भवनामाऽभवत् । स कैरपि धूर्तश्रमणैः प्रतार्य पर्यव्राज्यत । " तत शय्यम्भवं पितुर्दर्शनायोत्कण्ठितोऽसौ बालको निजजननीं छलयित्वा गृहान्निर्जगाम । तदा शय्यम्भवाचार्यो विहरन् चम्पायामासीत् । बालोऽपि पुण्यराशिनाऽऽकृष्ट इव तत्रैव ययौ । कायचिन्तादिना पुरपरिसरे गच्छन् सूरिर्दूरादायान्त कमलनयन बालमपश्यत् । त बाल पश्यत शय्यम्भवस्य चन्द्र समुद्रस्येव स्नेहातिशयेनाधिकतर उल्लासो बभूव । बालकोऽपि त मुनिचन्द्र दूराद् दृष्ट्वा सद्य कुमुदकोषवत् प्रफुल्लमुखोऽभूत् । आचार्योऽपि परमहर्षितस्त बाल पप्रच्छ—" त्व कोऽसि ?, कुत आयासि ? कस्य वा पुत्र ? कस्य वा पौत्रोऽसि ? " स बालोऽभिदधे—" अह राजगृहादागतोऽस्मि वत्सगोत्रब्राह्मणस्य शय्यम्भवस्य पुत्रोऽस्मि, मम गर्भस्थितस्य पिता प्राव्राजीत् । तमन्वेषयितु पुरात्पुरं पर्यटामि, यदि शय्यम्भव मे पितर भवन्तो जानते तर्हि पूज्यपादा प्रसद्य स क्वास्ति ? इति वदन्तु । यद्यह पितरं द्रक्ष्यामि तदा तत्पादपार्श्वेऽहमपि परिव्रजिष्यामि । तस्य या गति सा मेऽपि ।

तत सूरिरुवाच—" अह तव पितरं जानामि, स मे मित्र वर्तते । हे आयुष्मन् ! शरीरेणाप्यभिन्न तमिव मा जानीहि । हे शुभा-

शय ! तस्मात्त्वं मम सकाशे परिव्रज्या गृहाण । पितृपितृव्ययो· को नामभेदो भवति ! तत सूरिस्तं बालमादायोपाश्रयं जगाम । अथ सचिचो लाभोऽभूदिति स्वयमालोचयत् । सूरिस्तं बाल सर्वसावद्यविरतिपुरस्सरं व्रतमजिग्रहत् । सूरिरस्य कियदायुरित्युपयोगं ददौ । तत् षण्मासान् यावदस्तीति सद्योऽज्ञासीत् । तदा एव शय्यम्भवमुनिश्चिन्तयामास–“ अय बालोऽत्यल्पायुरस्ति तत्कथं श्रुतधरो भवितुमर्हति ! “ अपश्चिमो दशपूर्वी चतुर्दशपूर्वधरो वा केनापि कारणेन श्रुतसार समुद्धरेत् ”। मणकप्रतिबोधेऽस्मिन् कारण उपस्थितेऽहमपि सिद्धान्तार्थसमुच्चयं तस्मादुद्धरामि । तदा शय्यम्भवाचार्यः सिद्धान्तसारमुद्धृत्य दशवैकालिक नाम श्रुतस्कन्धमुवाच । विकालसमये दशाध्ययनयुक्तं शास्त्रं कृतमत एव तद्दशवैकालिकमिति नाम्ना प्रसिद्धम् । निर्ग्रन्थश्रेष्ठो दयालुशिरोमणि· श्रीशय्यम्भवाचार्यवर्यैस्तं मणक तं ग्रन्थमध्यापयामास । सूरिभिराराधनादिकं कृत्यं स्वय कारितोऽसौ मणकः षण्मासानन्तरं काल कृत्वा दिवं जगाम । मणके पञ्चत्व गते श्रीशय्यम्भवाचार्य· शारदमेघवन्नयनाभ्यामश्रुजलमवर्षत् । तदा दु खितविस्मिता यशोभद्रादय· शिष्याः सूरिं विज्ञपयामासुः भगवन् ! किमिदं योग्यं वः ?, कोऽत्र हेतुः ! ” । ततः सूरिस्तेभ्य· शिष्येभ्यः पुत्रसम्बन्धबन्धुर मणकवृत्तान्त जन्मत आरभ्य मरणपर्यन्त प्रोवाच । उवाच च सूरिरिति–“ बालोऽयमल्पीयसा कालेनापि पालितविमलचारित्रः समाधिना कालमकरोत् । अय बालोऽपि चारित्रेणाबालोऽभूदितिहर्षादस्माकमश्रुपातोऽभूत्, यत· पुत्रस्नेहोऽतिदुस्त्यजो भवति ।

ततो यशोभद्रादयः शिष्या नमद्ग्रीवा ऊचुः–“ पूज्यवर्यैरादावपत्यसम्बन्धः किं नास्माक ज्ञापितः ! । हे गुरो ! यद्यय मणकक्षुल्लकोऽस्माकं पुत्र इति गुरुपादा अल्पमप्यज्ञापयिष्यस्तदा ‘ गुरुवद् गुरुपुत्रेऽपि वर्तेतेति नीतिवचन वय तदीयसेवनात् सत्यमकरिष्याम· । ” प्रहृष्टः सूरिरुवाच–“ युष्मासु तपोवृद्धेषु वैयावृत्त्या श्रेष्ठं तप· तस्य सुगतिप्रदमभूत् । यदा ज्ञातास्मत्पुत्रसम्बन्धा उपासना

नाकरिष्यत, तदा स स्वार्थं व्यमोक्ष्यत । मयाऽस्य स्वल्पायुषं ज्ञात्वा श्रुतधरं कर्तुं सिद्धान्तसारमुद्धृत्य दशवैकालिकं व्यरचि । मया मणकार्थं ग्रन्थः कृतस्तेन निस्तारितश्च तस्मादिमं ग्रन्थं यथास्थाने निवेशयाद्य संवृणोमि । तदा यशोभद्रादिमुनयः सङ्घायेति न्यवेदयन्– " सूरिपादा दशवैकालिकं ग्रन्थं संवरिष्यन्ति । " सङ्घोऽपि प्रमुदित सूरिपादानभ्यर्थयामास–" भगवन् ! मणकार्थोऽप्ययं ग्रन्थः सर्वं जगदनुगृह्णातु । प्राणिनोऽत्र परमल्पमेधसो भविष्यन्ति, अतस्ते त्वत्प्रसादान्मणकवत् कृतार्था भवन्तु । अदो दशवैकालिकं श्रुतकमलस्य परागो वर्तते, तदनगारमधुपा आस्वादमास्वादं प्रमोदन्ताम् । " इति सङ्घोपरोधेन महात्मभिः श्रीशय्यम्भवसूरिभिर्दशवैकालिकग्रन्थो न संवव्रे । श्रीमाञ्छय्यम्भवः सूरिर्महामुनिं श्रुतसमुद्रपारगं श्रीयशोभद्रं स्वपदे प्रतिष्ठापयामास ।

अथ श्रीशय्यम्भवाचार्यः समाधिना कालं कृत्वोर्ध्वलोकमगात् । जगत्प्रदीपसमाना श्रुतकेवलिनः स्वकीयेऽपि कार्ये किं मुह्यन्ति ? ।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप–परिशिष्टपर्वणः श्रीतपोगच्छाधिपति–
शासनसम्राड्–सूरिचक्रचक्रवर्ति–आचार्यवर्य–श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ–शान्तमूर्ति–आचार्यश्री
विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि–प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न
व्याख्यानवाचस्पति–पन्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते
गद्यानुबन्धे प्रभवस्वामि–शय्यम्भवचरित्रवर्णनात्मकः पञ्चमः सर्गः ॥ ५ ॥

# षष्ठः सर्गः ६

## श्रीयशोभद्रादिसूरिवराणां वृत्तान्तः ।

अथ पूरितदिग्यशा. श्रीमान् यशोभद्रसूरिरुपवासाद्यैर्विहिताहारो धरणीं विजहार । चतुर्दशपूर्वधर· सोऽर्हत्प्रणीतेन धर्मेण विश्वमन्वरञ्जयत् । तस्य मेधाविनौ भद्रबाहु–सम्भूतविजयौ मुनी चतुर्दशपूर्वधरौ शिष्यौ बभूवतुः । श्रीमान् यशोभद्र. सूरिः श्रुतनिध्योस्तयोः स्वमाचार्यत्वमारोप्य परलोक साधयामास ।

अथ जगद्भद्रङ्करो भद्रबाहुसूरिर्भुवि विहरन् क्षमाश्रमणसङ्घेन शोभमानो राजगृह ययौ । तस्मिन् पुरे समानावस्था उद्यानवृक्षा इव सहैव वृद्धिं प्राप्ताश्चत्वारो वणिजोऽभवन् । ते भद्रबाहुसूरिसन्निधौ जैनधर्म शुश्रुवु । कषायवह्निजलाऽऽसारं प्रतिबोधं च लेभिरे । ते दान्तात्मानो गृहवासपराङ्मुखा श्रीभद्रबाहुपादान्ते सहैव प्राव्राजिषुः । तीव्र तपस्तप्यमाना उपार्जितबहुश्रुता महीतले युगमात्रदत्तदृष्टयो विहरन्तः प्रिया तथ्या मिता वाचं वदन्तः कुक्षिपाथेया निरीहा निर्ममा· साम्यशालिन सन्तुष्टा धर्मोपदेशतत्पराः करुणारससागरास्ते सरसि हंसा इव गुरुहृदि विविशुः । गुर्वनुज्ञयैकाकिविहारप्रतिमाधरास्ते भूयो राजगृहनगरं प्रापुः । तदा तत्र हिमर्तुर्भृशमभवत् । अथ तत्र तृतीये दिनप्रहरे भिक्षां कृत्वा निवृत्तास्ते वैभारपर्वतसमीप गन्तुमुपचक्रमिरे । गच्छतां तेषा पर्वतगुहाद्वारे नगरऽऽरामे आरामान्तिके पुरसमीपे च क्रमाच्चतुर्थः प्रहरोऽभूत् । भिक्षा गमन वा तृतीययामे कुर्वीत ’ इति हेतोस्तेतुर्ययामे प्रतिमाधरास्तत्रैव तस्थुः । यो गिरिगुहाद्वारेऽतिष्ठत् तस्यात्यन्त शीतमजायत । य उद्याने तस्थौ तस्य तदपेक्षया किञ्चिन्मन्द शीतमभूत् । य उद्यानसमीपे तस्थौ तस्य तदपेक्षया मंद शीतमभूत् । यस्तु पुरसमीपेऽस्थात् तस्य तु पुरोष्मणाऽत्यल्पतर शीतमभूत् । चत्वारोऽपि श्रमणा. शीतेन विपद्य क्रमात्

प्रथम द्वितीय-तृतीय चतुर्थप्रहरेषु स्वर्गं ययु ।

## उदायीनृपवृत्तान्त ।

इतश्च चम्पानगर्यां श्रेणिकात्मजे कूणिके राज्ञि पञ्चत्व गते तत्सुत उदायी नाम राजाऽभूत् । दुर्दिनेन चन्द्र इव निगूढतेजा पितृमरणशोकेनाऽऽक्रान्त स राज्येऽपि प्रमोद न प्राप । स कुलामात्यानुवाच " अत्र समस्ते पुरे पितृक्रीडास्थानानि पश्यतो मे मनो व्यथते । सैवेय सभा, यस्यां मे पिता क्षणे क्षणे मां क्रोडादपरित्यजन् सिंहासनमध्यास्त । इहाक्रीडत्, इहारंस्त, इहाशेत मम पितेति सर्वत्र जलचन्द्रवत् पश्यामि । तातपादानग्रे स्थितानिव पश्यतो राजचिह्नधरस्य मे सुखमपि सदाऽस्तोकशोक शल्यमिव दु खाकरोति च ।

वहुदृष्टा वहुश्रुता अमात्यास्त अपि तु वाचयमा इव शोकशङ्कुच्छिदा वाचा प्रोचु —" इष्टवियोगेन कस्य शोको न स्यात् " । भवता स शोको शुष्कारण्यज्वरणीय , अन्यथा ते लज्जा स्यात् । यद्वेह पुरे वसतस्ते शोक स्यादेव, तस्मादन्यन्नगरं हे राजस्त्व निवेशय । तव पिता कूणिकोऽपि प्राग् राजगृह पुरं विहाय पितृशोकेनेमां चम्पानगरीमकारयत्, " तत उदायी राजाऽपि नैमित्तिकवरानाहूय पुरनिवेशयोग्य स्थानमन्वेषयितुमादिदेश । तेऽप्युत्तरोत्तरान् प्रदेशान् सर्वत्र पश्यन्तो नेत्रविश्रामस्थाने सुन्दरगङ्गातीरे ययु । तेऽपि तत्र गङ्गातटे पुष्पारुण सपत्र घनच्छाय पाटलिवृक्ष पृथिव्याच्छत्रमिवापश्यत् । अहो उद्यानवाह्योऽप्यय वृक्ष सकलापोऽस्ति । इत्य चमत्कृते तत्र चापपक्षिण ददृशु । वृक्षशाखोपविष्ट स खगो मुख मुहुर्व्यादात् । व्यात्ते तन्मुखे कीटिका कवलीभवितु स्वयमागत्य निरन्तरं निपेतु । ते चिन्तयन् यथाऽत्र प्रदेशेऽस्य खगस्य मुखे कीटिका स्वयमागत्य निरन्तरं निपतन्ति तथाऽत्रोपमे स्थाने नगरेऽपि निवेशिते पुण्यात्मनोऽमुष्य राज्ञ सम्पद स्वयमागमिष्यन्ति । " इति निश्चित्य राज्ञस्तत्स्थान नगरनिवेशयोग्य चाषलक्षण निमित्त

विवृण्वन्तस्ते व्यजिज्ञपन् । वदतावर एको वृद्धनैमित्तिक उवाच—" ज्ञानिना पुरा कथितेयं पाटला न सामान्या ।

## अन्निकापुत्रचरित्रम्

तथाहि—दक्षिणोत्तरे समानसौन्दर्यगुणे युग्मजे भगिन्याविव द्वे मथुरे नगर्यौ स्तः । तत्रोत्तरमथुराया देवदत्ताभिधो वणिक्पुत्रो दक्षिणस्या मथुराया दिग्यात्रार्थं जगाम । तस्य वणिक्पुत्रजयसिंहेन मैत्री बभूव । तौ परस्परं रहस्यैकनिधानता प्रापतुः । जयसिंहस्य भगिनी अन्निकानाम्नी कुमारी रूपसम्पदा भूगता स्वर्गाङ्गनेव बभूव । अन्यदा जयसिंहोऽन्निका स्वभगिनी समादिदेश—हे भगिनि ! अद्य समित्रोऽहं भोक्ष्ये, तद् दिव्या रसवतीं सम्पादय । " इत्युक्त्वा जयसिंहेन देवदत्तसुहृन्निमन्त्रितः तद्गृहे भोक्तुमागमत्, ततो द्वावपि निषेदतुः । ततोऽन्निका सुवेषधरा द्वयोरप्यष्टादश भक्ष्यभेदान् षड्रसास्वादसुन्दरान् परिवेषयामास । तौ पवनेन प्रीणयितुं मक्षिका दूरीकर्तुं च व्यजन धुन्वती द्व्यर्थकारि कर्म चक्रे । ततो देवदत्तो व्यजन दोलयन्तीं चन्द्रमुखीं ता पश्यन् कामवशोऽभूत् । स लावण्यजलदीर्घिका तां बाला पश्यस्तथा रिरंसुर्भोज्यास्वादं नाज्ञासीत् । तस्य दृष्टिस्तस्यामापादतलमस्तकमारोहावरोहौ लताया वानरीव चकार । अस्या नयनमित्रताप्रत्यूहो मा भूदिति विज्ञ· स स्थिरोऽपि गजेन्द्रलीलया स्थिरतर बुभुजे । भोजन कृत्वा स ता स्मरन् स्वस्थान ययौ । देवदत्तोऽपि द्वितीयदिनेऽन्निका याचितु जयसिंहसमीपे सेवकान् प्रेषयामास । ते गत्वोचु·—" अमूमन्निका यस्मैकस्मैचिद्यदि दास्यसि तर्हि देवदत्ताय देहि । यादृशोऽस्त्येष इति त्व जानासि । " स उवाच—" अय कुलीनः कलाज्ञ सुधीश्च युवा चास्ति ! किं बहूक्तेन ? इह सर्वे वरगुणाः सन्ति । किन्त्वह तस्मै स्वभगिनीं दास्यामि यो मद्गृहात् कचिन्न गमिष्यति । अत्र स्थित तमात्मवद् द्रक्ष्यामि । किन्तु सम्भाव्यते यदयं सुन्दरोऽप्यद्य श्वो वा यास्यति, ' विदेशस्थ· प्रायेण गमिष्यतीति भवन्तः किं न शुश्रुवुः ! '। ममेय भगिनी प्राणप्रिया लक्ष्मीरिव

मद्गृहे वर्तते । तस्मादिमां विवोढुरपि गृहे न प्रेषयिष्यामि । यदि देवदत्तोऽपत्यजन्मपर्यन्तमेव कर्तुं समर्थस्तदेमां मेऽम्बिका भगिनीं परिणेतुमर्हतु । " ते देवदत्तानुजयोमिति स्वीचक्रुः । देवदत्तोऽपि शुभदिने तां कन्यां परिणिन्ये ।

एकदा तत्राम्बिकाप्रेमरज्जुबद्धस्य तिष्ठतस्तस्य समीपे तदीयपितृभ्यामुदन्मधुराभ्यामीदृशो लेखः प्रेषयाञ्चक्रे–" हे आयुष्मन् ! नेत्रहीनौ चतुरिन्द्रियतां गतौ जराजर्जरसर्वाङ्गावासन्नमरणशासनौ आवां यदि जीवन्तौ दिदृक्षसे तर्ह्यत्रैहि रुदतोरावयोर्नेत्रे शीतलीकुरु च । " स स्नेहसागरचन्द्रस्तं लेखमवाचयत् । निरन्तरक्षरन्नेत्रजलेनासिञ्चच्च । अचिन्तयच्च–' मां धिग्धिक्, पितरौ मे विस्मृतौ, अहं विषये मग्नोऽस्मि । पुनर्मम पित्रोरीदृशी दशाऽस्ति ', अहं किं करोमि, कथं यामि ! मम पत्न्यपत्यदर्शरी न । निजवाक्पाशबद्धस्य मे का गतिर्भविष्यति '। तद्दुःखदुःखिताऽम्बिकाऽपि भवन्ती तन्नयनप्रमार्जनेन स्ववस्त्रं क्लेदयन्ती सद्य एव जगाद–" केन प्रहितोऽयं लेखस्त्वन्नेत्रचन्द्रकान्तयोर्दुर्वारं जलं द्रावयश्चान्द्रीं कलां कलयति । तव निष्कलापं मुखं गगनेन्दुवद् दृष्ट्वाऽश्रुपूरोऽयं दुःखजो न तु हर्षज इत्यहं निश्चिनोमि । तत्स्वकीयदुःखनिवेदनेन मामपि तत्सम्भावय । भवद्दुःखविभागधुरीणता ममाप्यस्तु । " परं चाम्बिकापतिर्दुःखी सन् किमप्युत्तरं न ददौ, अपि तु तं लेखं स्वनेत्रजले स्नपयन्नेव तस्थौ । अम्बिकाऽपि तं लेखमादाय स्वयमवाचयत् । तद्दुःखकारणं सद्योऽज्ञासीत्, न्यगदच्च–" हे आर्यपुत्र ! सर्वथा दुःखं मा कार्षीः, शीघ्रमहं भ्रातरं बोधयिष्यामि त्वदीप्सितं कारयिष्ये च । " सा नितरां कुपितेव स्वभ्रातरं गत्वोवाच–' हे भ्रातर्विवेकिन् ! इदं त्वया किमकारि ' तव भगिनीपतिः स्वकुटुम्बवियोगेन क्लिश्यते । अहमपि श्वश्रू–श्वशुरपादानां दर्शनायोत्कण्ठिताऽस्मि । तस्मात्त्वं मत्पतिं स्वस्थानं गन्तुमादिश । अहमपि तमनुगमिष्यामि, यतो मे प्राणास्तदधीनाः सन्ति । अयं यास्यत्येव, अहं तु श्वशुरौ प्रणन्तुमेकाकिन्यपि यास्यामि । तदनेन किं कार्यम्, "

इत्याग्रहपूर्वकं मुहुर्मुहुरुक्तो जयसिंहो देवदत्तमुत्तरमथुरा प्रति प्रयातुमन्वमन्यत ।

ततः स वणिक्पुत्रस्तस्या नगर्या निर्ययौ । अन्निकाऽपि त रात्रिश्चन्द्रमिवान्वगच्छत् । तदाऽन्निकाऽतिनिकटप्रसवा गुर्वी बभूव, इति सा मार्गे एव सुलक्षणं पुत्रमसूत । अस्य सुतस्य नाम स्थविरौ पितरौ करिष्यत इति तौ दम्पती स्वमनीषया नैव चक्रुः । तदनुगामी परिजनस्तं बाल मुदा लालयन्नन्निकापुत्र इति पथि समुल्लापनेन जगौ । अथान्निकापतिरुत्तरा मथुरां जगाम, तौ पितरौ ववन्दे च । ताभ्या मूर्ध्नि सोऽचुम्बि च । मम देशान्तरोपार्जनेयमुपादीयतामिति कथ्यमान॰ स हृष्टयोः पित्रोर्बालक समर्पयामास । इयं वधूर्युष्माकम्, अयं च मत्पुत्रो वधूकुक्षिजात ' इति भक्तिबन्धुरया वाचा सम्बन्ध न्यवेदयत् । तस्य पुत्रस्य नाम पितरौ सन्धीरणेति चक्रतु॰, अन्निकापुत्र इति तु लोकनाम्ना स प्रसिद्धोऽभूत् । कुटुम्बेन लाल्यमानो वर्धमानोऽन्निकापुत्रश्चतुर्वर्गार्जनसुख मध्यमं वय॰ प्राप । धीधन. स यौवनेऽपि तृणमिव भोगानपास्य जयसिंहाचार्यपार्श्वे परिव्रज्यामग्रहीत् । स व्रतिवर॰ खड्गधारातीक्ष्णव्रतेन निजान् दारुणकर्मकण्टकान् दारयामास । सोऽतितीव्रेण तपोवह्निना कर्ममहामलं दग्ध्वा वह्निशौचांशुकमिवाऽऽत्मानमशोधयत् । क्रमेण परिणतचारित्रज्ञानदर्शनः स स्वगच्छकमलसूर्य आचार्यवर्यधुर्योऽभूत् ।

स मुनिर्वृद्धत्वे सपरिवारो विहरन् गङ्गातीरालङ्कारं पुष्पभद्रनाम पुर ययौ । तत्र पुरे पुष्पकेतुनामा राजाऽभूत् । तस्य पत्नी पुष्पवती नाम्नी कामस्य रतिरिव बभूव । पुष्पवत्या युग्मजौ पुत्रः पुत्री चाभूताम् । तयोर्नाम पुष्पचूलः पुष्पचूला चेत्यभूत् । सहैव वर्धमानौ सहैव क्रीडन्तौ तौ परस्परं प्रीतिमन्तौ बभूवतुः । राजा दध्यौ—' यद्येतौ बालौ मिथः स्नेहलौ वियुज्येयाता तर्हि नूनं मनागपि न जीवेताम् । अहमप्यनयोर्वियोगं सोढुमशक्तोऽस्मि । तस्मादनयोर्विवाहमङ्गलमुचितम् ॥ "

अथ राजा मन्त्राणि मन्त्रिणः पौरांश्च पप्रच्छ—" अन्तःपुरे यद्रत्नमुत्पन्नं तस्येश्वरः को भवितुमर्हति ? ।" ते जगदुः—" देशमध्येऽपि यद्रत्नमुत्पद्यते तस्येश्वरो राजा भवति, अन्तःपुर उत्पन्नस्य तस्य का कथा ?, स्वदेशे यद् यद्रत्नमुत्पद्यते तत्तद्राजा विनियुञ्जीत । तस्य को बाधकोऽस्तु ।" नृपो मायानभिज्ञानां तेषां वचनमालम्ब्य तयोः स्वबालयोः सम्बन्धं चक्रे । तस्य राज्ञी पुष्पवतीनाम्नी श्राविकाऽभूत् । तथा तथा कुर्वन् स वार्यमाणोऽपि तामपि न गणयामास । तत्र पुष्पचूलः पुष्पचूला च दम्पती नितान्तमनुरागिणौ गृहिधर्मं सिषेवाते । क्रमेण पुष्पकेतौ राज्ञि मृते सति विमलगुणे राजमानः पुष्पचूलो राजाऽभूत् ।

तदा तदकार्यं निर्वारयन्ती पुष्पवती राज्ञी पत्याऽपमानिता सती विरक्ता व्रतमग्रहीत् । सा व्रतप्रभावाद् देवोऽभूत् । यतः प्रव्रज्या यदि मोक्षाय न भवति स्वर्गाय भवत्येवेत्यत्र संदेहो नास्ति । स देवोऽवधिनाऽकृत्यविनियोजितां तां स्वकन्यामद्राक्षीत् । तत्स्नेहादित्यचिन्तयत्—" इयं कन्या मम पूर्वजन्मनि प्राणप्रियादुहिताऽभूत्, तस्मात्तथाऽहं करवै यथेयं घोरनरके न पतेत् ।" स देवः तस्याः स्वप्नमध्ये नरकावासदारुणांश्छेदभेदादिदुःपीडितसंरटन्नारकिकाऽऽकुलान् पावकेनाङ्गारापदेशतः संरुद्धानिव दुर्दर्शान् सर्वान्नरकानदर्शयत् । श्येनमुक्ता वर्तिकेव, दवनिर्गता हरिणीव, परपुरुषकरस्पर्शपलायिता सतीव, आयाततपोऽतिचारविधुरीकृता सुसाध्वीव, दृष्टनरका सा भयेन प्रबुद्धाऽप्यकम्पत । सा नरकदर्शनान्नरकं गतेव बिभ्यती सर्वं तं स्वप्नं पत्यग्रेऽकथयत् । पुष्पचूलोऽपि पुष्पचूलायाः क्षेमेच्छुः शान्त्यै शान्तिकं कर्म सम्यक् कारयामास । स पुष्पवतीजीवस्तत्कल्याणकामनया प्रतिरात्रि तादृशानेव नरकानदर्शयत् ।

अथ राजा सर्वान् पाषण्डिन आह्वयत्, अपृच्छच्च—" नरकाः कीदृशा इति यूयं कथयत ।" तेऽल्पमतयो गर्भवासो, गुप्तिवासो, दारिद्र्यं, पराधीनता, एते साक्षान्नरका इत्यकथयन् । सा दुर्गन्धमाघ्रायेव मुखमोटनं कुर्वाणा स्वस्वप्नविरुद्धवादिनस्तानत्यजत् । ततो राजाऽ-

न्निकापुत्रमाहूयापृच्छत् नरकान् । स यथा तया दृष्टास्तथैव कथयामास । राज्ञ्युवाच—' भगवन् ! भवद्भिरपि किं मयेव स्वप्नो दृष्टः ?
अन्यथा कथमित्थ जानीथ, ततः सूरिरुवाच—" हे भद्रे ! स्वप्नदर्शन विनाऽपि तन्नास्ति यज्जिनागमान्न ज्ञायेत । पुष्पचूलाऽपि पप्रच्छ—
" भगवन् ! प्राणिन केन कर्मणेदृग्घोरान्नरकान् प्राप्नुवन्ति ।" अन्निकापुत्र उवाच—महाऽऽरम्भपरिग्रहैर्गुरुद्रोहात् पञ्चेन्द्रियादिवधान्मांसा-
हाराच्च प्राणिन· पाप कृत्वा एषु नरकेषु यान्ति, तत्र दु·खान्यनुभवन्ति च । ततस्तस्या जननीजीवदेवस्तत्प्रभृति स्वप्ने नरकानिव
प्रचुरसौख्यान् स्वर्गान् दर्शयामास । प्रबुद्धा सा स्वप्नदर्शन पतिं प्रति निवेदयामास । अथ राजा पाषण्डिनोऽपृच्छद्—ब्रूथ किं स्वर्ग-
लक्षणम् ? तेष्वेकः कश्चिदुवाच—" स्वर्गस्वरूप प्रियसङ्गमः ।" अन्ये तु कथयामासुः—" यद्यत् सुखकारणं स स्वर्ग इति ।" एव
पाषण्डिकथितं स्वर्गस्वरूपं पुष्पचूलिका नामन्यत, यतः सा स्वप्नदृष्टस्वर्गस्वरूपाऽभूत् । ततो राज्ञा पृष्टोऽन्निकापुत्रो देवस्थितिमुवाच—
" मनश्चिन्तितकार्याणि सिध्यन्त्येव, आरामाः कल्पवृक्षभूषिताः, वाप्यः स्वर्णपङ्कजशोभिताः, देव्यश्चित्तानुवर्तिन्यो रूपवत्यः कलाविज्ञाः,
यथादिष्टकारिण आभियोगिका देवाः । तथेच्छामात्रेण मनोहरसङ्गीतनाटकाभिनयोत्सवा· । शाश्वतविमानानि च सुन्दररत्नगृहाणि ।
देवाश्च सदा सर्वशक्तिधारिणः । इत्थ व्यन्तरपुरादारभ्याऽऽनुत्तरविमानपर्यन्तस्थाना देवाना सुखानि न वर्णयितु शक्यानि । तच्छ्रुत्वा
पुष्पचूलोवाच—" यूय यदीदृश जानीध्वे, तत् किं सर्वे स्वर्गाः स्वप्ने ददृशिरे भवद्भिः " ? " मुनिरुवाच " कल्याणि ! जिनागमामृतपान-
प्रभावाद् वयं स्वर्गसुखानि ज्ञेयान्तराणि च विद्म. "। तच्छ्रुत्वा राज्ञी ' जैनं वचनं प्रमाणमि'ति निश्चित्य पुनर्मुनिं पप्रच्छ—" भगवन् ! केन
कर्मणा स्वर्गः प्राप्यते ? " । सूरिरुवाच—" भद्रे ! यस्य ससारिणोऽर्हति देवे गुरौ साधौ च श्रद्धाऽतिशयः तस्य स्वर्गप्राप्तिरत्यन्तं
सुलभा " । पुनर्मुनिना चारित्रधर्मे कथिते सति सा राज्ञी लघुकर्मत्वाद् भवोद्विग्नैवमुवाच—" भगवन् ! स्वपतिं पृष्ट्वा तवैव पादमूले नरदेह-

तत्फलं मत ग्रहीष्यामि " इत्युक्त्वा तमृषिं नत्वा विसृज्य च राजानमापृच्छत् । राजाऽपीदमुवाच—" वरवर्णिनि ! त्वां मतार्थं तदाऽनुमन्ये, यदि मत गृहीत्वा मद्गृह एव भिक्षामादत्से " । तथेति स्वीकृत्य सौचूडामणिर्महाशया सा पुष्पचूला याचकेभ्य कल्पलतेव दान ददती राज्ञा कृतनिष्क्रमणोत्सवाऽन्निकापुत्रपादान्ते दीक्षामग्रहीत् । गुर्वाज्ञावशवदा च सा सर्वां शिक्षामग्रहीत् । यत शुद्धात्मनामपि तपः सामाचारीप्रधान भवति ।

अन्यदाऽन्निकापुत्रो भविष्यद्दुर्भिक्ष ज्ञात्वा गच्छ देशान्तरे प्रैषयत् । यत स एव देशो यत्र जीविका लभ्यते । गच्छोऽपि ज्ञातवान्—अकमशिव भावीति शास्त्राद् गुरूपदेशाच्च ज्ञात्वाऽन्यत्रागमत् । सूरयश्च जङ्घाबलस्य परिक्षीणत्वात् परिवारं विनाऽपि तत्रैवाङ्गीकृत परीषहा अस्थु' । पुष्पचूला च प्रतिदिन भक्तपानादिकमन्त पुरादानीय पित्रे पुत्रीव गुरवे भक्त्या ददौ । अन्येद्युरनन्यमनस सदा संसार नि सारतां भावयन्त्यास्तस्या पुष्पचूलाया अपूर्वकरणक्रमाद् गुरुशुश्रूषाप्रभावान्मुक्तिसम्पत्तिनिदान केवल समुदपद्यत । एव सत्यपि सा विशेषतो गुरोर्वैयावृत्त्य चकारैव । उक्तश्चायमर्थ आगमे—" य पुरा यस्य कृत्य प्रयुञ्जानोऽभूत्, स केवल्यपि तस्य तत्कृत्य प्रयुञ्जीत, यावत् स न ज्ञातो भवति " । किञ्च पुष्पचूला सूरिचिन्तित सर्वं केवलज्ञानसम्पदा विज्ञाय समपादयत् । तेन च जातविस्मय सूरि स्तामपृच्छत्—" वत्से ! त्व ममाऽभिप्राय कथ जानासि, यन्मच्चिन्तित सर्वं सम्पादयसि ? " । पुष्पचूलोवाच—" भवदीयप्रकृतिमह जाने, यतो यो यस्य समीपे तिष्ठति स तस्य प्रकृतिं जानाति " । अन्यदा साऽऽर्यिका मेघे वर्षत्यपि पिण्डमानैषीत् । तत सूरि पप्रच्छ—" त्वं श्रुतज्ञाऽसि, तर्हि दृष्टो किमिदमुचितमस्ति ? " । सोवाच—" यत्र मार्गेऽचित्त एवाप्कायोऽभूत्, तेनैवाहमगमम् । तस्मादत्र विषये मम कृते प्रायश्चित्तप्राप्तिर्नास्ति " । तत सूरिणा अचित्ताप्काय मार्गं त्व कथ वेत्सी'ति पृष्टा पुष्पचूलोवाच—भगवन् ! केवलमुत्पन्न

मस्ति "। अथ " मिथ्या मे दुष्कृतम् " " आशातित: केवली "ति वदन्नाचार्योऽचिन्तयत्–" अहं सेत्स्यामि न वा ? "। केवल्यूचे– " मुनिवराः ! यूयं माऽधृतिं कुर्वीढ्वं, युष्माकं गङ्गानदीमुत्तरता केवलं भविष्यति "। तत सूरयो लोकेन सह गङ्गानदीमुत्तरीतुं नावमारुरुहुः, यत: के नर: स्वार्थं त्यजन्ति ? । स आचार्यो नाव: यत्र यत्र प्रदेशे उपविवेश, नाव स स प्रदेशो मङ्क्तुमारेभे, तस्मिन्नाचार्यवरे नौमध्यमध्यासिते च नौका लौहवज्जले समन्तान्मङ्क्तुमारेभे। तत: स सूरिर्लोकैन गङ्गाजले न्यक्षेपि। ततश्च त प्रवचनप्रत्यनीकाऽमरी शूले न्यधात्। गङ्गामध्ये शूलप्रोतोऽपि च स सूरिरेवमचिन्तयत्–" अहो मम शरीरमनेकप्राण्युपद्रवनिमित्तं जातम् "। तदेवमप्कायादिदयासार भृश भावयन् स सूरि: क्षपकश्रेणिमारूढोऽन्तकृत् केवली बभूव। चतुर्थशुक्लध्यानस्थितश्च सद्यो मोक्षमाप। ततश्च तत्समीपस्था देवास्तस्य निर्वाणमहोत्सवमकार्षुः। देवैश्च तत्र तन्निर्वाणमहो व्यधायीति तत् तीर्थं त्रिभुवने " प्रयाग " इति नाम्ना पप्रथे। अथान्निकापुत्रस्य मुण्डं मकरादिजलजन्तुभिः क्षोभ्यमान जलतरङ्गैर्नदीतटमानीयत। शुक्तिकेवेस्ततो लुठन्मुण्ड क्वापि गुप्ते विषमप्रदेशे विलग्य तस्थौ। तन्मुण्डमध्ये च कदाचित्केनचिद्दैवयोगेन पाटलाबीज न्यपतत्। कालक्रमाच्च तस्य दक्षिणचिबुकात्कर्पर भिन्दन् पाटलावृक्ष उदपद्यत। क्रमादयं विशालोऽभूत्। महामुनिमुण्डकर्परेऽयमुत्पन्न, मूलजीवश्चास्यैकावतार इति विशेषत पवित्रोऽयं पाटलावृक्ष:, तस्मादत्रास्य वृक्षस्य प्रभावमाश्रित्य चाषनिमित्त च दृष्ट्वा नगरं निवेश्यतामिति नृपः समादिशत्। तदा सर्वनैमित्तिकाऽऽज्ञया एको नैमित्तिक उवाच–" पुरनिवेशने उपक्रान्ते यत्रेयं शिवा रौति तदवधिसूत्र दातव्यम् "। ' यूय प्रमाणमि 'त्युक्तवान्नृपः तान् नैमित्तिकान् नगरनिवेशे सूत्रपातार्थमादिशत्। ततश्च ते नैमित्तिका: पाटलावृक्ष पूर्वतः कृत्वा ततः पश्चिमा, तत उत्तराम्, ततः पुनः पूर्वां, ततः शिवाशब्दावधि दक्षिणा गत्वा सूत्रमपातयन्। ततश्च तदा नगरस्य चतुरस्र: सन्निवेशोऽभूत्। तत्राङ्कित भूप्रदेशे राजा

नगरमरचयत् । तत् पाटलावृक्षनाम्ना पाटलिपुत्रनामकमभूत् । राजा तस्य पुरस्य मध्ये शाश्वतायतनतुल्य श्रेष्ठ जिनमन्दिरमकारयत् । शुभदिने च महोत्सवपूर्वक हस्त्यश्वशालाबहुल राजप्रासादसुन्दरं विशालशालमुद्दामगोपुरहर्म्यादिबन्धुरं पण्यसत्रपौषधादिशालाभूषित तन्नगरमलङ्चके । तत्र लक्ष्म्योदयमागुदायी राजा स्व विक्रममखण्ड कुर्वाण इव जैन धर्मे वितन्वन् राज्यमकरोत् । तस्य हृदये देवोऽर्हन्, गुरु साधु, धर्मश्चार्हत इति देवतत्त्व गुरुतत्त्व धर्मतत्त्वश्चाभूत् । महाशय स चतुष्पर्व्यां चतुर्थादितपसाऽऽत्मान पवित्री कुर्वन् पौषधशालायां पौषधमग्रहीत् । तथा धमाबाधेन क्षात्र तेज प्रभावयन् चतुर्थोपायेन प्रतिपक्षनृपतीन् स्वसेवकानकार्षीत् ।

अथ ते सर्वे राजानोऽत्यन्तमाक्रान्ता अहरहरेवमचिन्तयन्—अयमुदायी यावज्जीवति, तावदस्माक राज्यसुख न भविष्यति । इतश्चै कदा कस्यचित् राज्ञोऽपराधे जाते महाप्रतापिनोदायिना तस्य राज्यमुदच्छेदि । स च राजा छिन्नराज्यो नश्यन्नेव विपेदे । तत्पुत्रश्चैक इतस्तत परिभ्रमन्नुज्जयिनीं ययौ । तत्र गतश्च सोऽवन्तीनरेशमसेवत् । अवन्तीपतिरपि उदायिनो नित्यमसहनोऽभूत् । सेवक स राजपुत्र स्तमवन्तीपतिमुवाच—“देव ! अहमुदायिन तवाऽऽज्ञया साधयिष्यामि । त्वया ममाव्यभिचारिणा सहायकेन भाव्यम् । यत को निज प्राणास्तृणीकृत्य व्यर्थ साहस कुर्यात्” तथेति स्वीकृतवत्यवन्तीनाथे स राजपुत्र पाटलिपुत्रमुपेत्योदायिनः सेवकोऽभूत् । स दुरात्मा नित्य पश्यन्नपि उदायिनृपस्य छिद्र मान्त्रिकं व्यन्तर इव न प्राप । स परमार्हतस्योदायिनो गृहे सदाऽस्खलद्गमनान् जैनमुनीनेव ददर्श ।

अथ स उदायिनो राजकुले प्रवेशमाकाङ्क्षन् एकस्य सूरे सन्निधौ परिव्रज्यामग्रहीत् । सकपटश्चानतीचारं व्रत पालयन् मुनीं स्तथाऽऽराधयाञ्चके यथा ते मुनयस्तन्मयता प्रापुः । केनाऽपि तस्य दम्भप्रधान श्रामण्य नालक्षि । यत सुप्रयुक्तस्य कपटस्यान्त

ब्रह्माऽपि न गच्छति ।

अथोदायी प्रत्यष्टमीचतुर्दशि पौषधं गृह्णाति स्म। सूरयश्च तत्समीपे धर्मकथार्थं निवसन्ति स्म। एकदा पौषधदिवसे विकाले सूरयो राजकुल प्रतिचेलु.। स कपटश्रमणश्चापि प्राप्तविश्वासाना सूरीणामाज्ञया तदुपकरणानि गृहीत्वा भक्तिनाटितक कुर्वन् छल मनसि सन्धाय सह चलितवान्। उदायिनं जिघासुश्च चिरगोपिता कङ्कमयीं कर्त्तरिका गृहीत्वा प्रच्छन्नं धारयामास। चिरप्रव्रजितस्यास्य शमः परिपक्वो भवेदिति विश्वस्तः सूरिस्तेनैव सह राजकुलं ययौ। तत्र राजकुले च सूरिर्धर्मं व्याख्यायास्वपत्। राजाऽपि स्वाध्याय-खिन्नो महीतलं प्रतिलिख्यास्वपत्। स पुनर्दुरात्मा मायाश्रमण' जाग्रदेव तस्थौ। यतो रौद्रध्यानवता नृणा भीतेव निद्रा नाऽऽगच्छति। प्राप्तावसरश्च स कपटसाधुः सुप्तस्य राज्ञो गलकन्दले लोहमयीं यमजिह्वासमा ता कर्त्तरिका निचिक्षेप। तया च कर्त्तरिकया कदलीकाण्ड-कोमलो राज्ञः कण्ठोऽकर्त्ति। ततो घटकण्ठाज्जलमिव रक्त निर्ययौ। स च पापीयान् कायचिन्ताच्छलेन तदैव ततो निर्जगाम। यामिकैरपि यतिरिति न जल्पित'।

इतश्च राज्ञस्तेन शोणितेन सिक्ता प्रबुद्धा. सूरयोऽपि निर्नालकमलमिव कृत्त राजमूर्धानमद्राक्षुः। तञ्च कपटश्रमणमपश्यन्निदम-चिन्तयन्—“ तस्यैव कपटव्रतिन इदं कर्म भवेत्, यतोऽत्र सम्प्रति स न दृश्यते। रे दुष्ट! किमकार्यमकार्षी' ? यदय धर्माधारो नृपति-स्त्वया निहतः, अथ च प्रवचनस्यापि मालिन्यमधा। यस्मादय दुष्टो मया दीक्षितः स्वेन सहाऽऽनीतस्तस्मान्मत्कृत प्रवचनमालिन्यमा गमत्। तस्मादहं दर्शनम्लानिं स्वघाताद् अपनुदामि। राजा गुरुश्च केनापि हताविति लोकवाग् लोके प्रथताम् ” तदेव निश्चित्य सूरिर्भवचरमप्रत्याख्यान कृत्वा ता कर्त्तरिका कण्ठे न्यस्य पञ्चत्वमगमत्।

अथ प्रातःकालेऽन्तःपुरशय्यापालिकास्तत्राऽऽगता तदमङ्गलं दृष्ट्वा वक्षस्ताडयन्त्यः पूच्चक्रुः । तदा सर्वो राजपुरुषादिर्मिलितोऽचिन्तयत्–“ राजा गुरुश्च क्षुल्लकेन निहतावत्र न संदेहः । हन्ताऽन्यो यदि, तर्हि स क्षुल्लक एव प्रथमं कथयेत् ? अत एव महासाहसं कृत्वा स पलायाञ्चक्रे । वैरी वा वैरिपुत्रो वा वैरिणा प्रेषितो वा कोऽपि कपटव्रतीभूय विश्वस्तं राजानमवधीत् । सूरिर्नृपस्य पिता इव, राजाऽपि सूरेः पुत्र इवाऽऽसीदिति सूरिणा स धर्तुं वारयितुं वा प्रचक्रमे, अत एव तपःक्षामशरीरः सूरिर्दुरात्मना तेन तथा कुर्वन् मूललूनः नृप इव निपातितः । विनयच्छलेन स सूरिरपि तेनाऽवञ्चि । तत एव स सूरिस्तस्मै दुष्टाय दीक्षां ददौ । यतो धूर्तैः को न वञ्च्यते ? । केऽपि नृपभटाः निशि नष्टं तं न प्रापुः । यतः–‘ यः क्रमेणाऽपि त्यक्तः स क्रमशतेनाऽपि त्यक्तः ’ । तदनन्तरं प्रधानपुरुषा अश्रूणि मुञ्चन्तो राजसूर्योः शरीरसंस्कारं चक्रुः ।

इतश्च स दुष्टः उदायिघातकः उज्जयिनीं पुरीं प्राप्तवान् । यथाचोदायिनृपतिर्हतस्तथैव राज्ञे न्यवेदयच्च । तच्छ्रुत्वाऽवन्तीपतिरुवाच–“ रे पाप ! यस्त्वमियता कालेन परिव्रज्यां गृहीत्वाऽपि मुनिनिकटे स्थित्वाऽपि अहर्निशं धर्मोपदेशान् श्रुत्वाऽपि दुष्टधीरीदृशं कर्माऽकार्षीः, स त्वं मे हितं कथं भवेः ? त्वमद्रष्टव्यमुखोऽसि, शीघ्रमितोऽपसर ” इत्येवं राजा तं बहु निर्भर्त्स्य स्वनगरान्निरवासयत् । तत्प्रभृत्येवाभव्यशिरोमणिः स जगत्युदायिमारक इति ख्यातोऽभूत् ।

## नन्दस्य राज्याभिषेकः

अथ तस्मिन्नेव नगरे एकस्य नापितस्य वेश्याकुक्षिजातो नन्दाऽभिधानः पुत्रोऽजनि । स नापितकुमारः प्रातः स्वप्ने स्वैरन्त्रैः परिवेष्टितं पाटलिपुत्रं ददर्श । तद्दृष्ट्वा प्रबुद्धः स नन्द उपाध्यायं तं स्वप्नं पप्रच्छ । तद्विज्ञः उपाध्यायोऽपि तं स्वगृहे निनाय । स प्रसन्नो नन्द

भूषणादिभिर्भूषयामास । स्वकन्या तेन परिणाययाञ्चकार च । उपाध्यायो नवीनं जामातरं त नन्द शिविकायामधिरोप्य पुरे परिभ्रमयितुमारेभे । अत्रान्तरे मन्त्रिभि " रुदायी पुत्रगोत्रहीन' परलोकमगादि " ति तत्स्थाने को राजा भवेदिति परीक्षणार्थम् पञ्चदिव्यानि अभिषिक्तानि । एकः पट्टहस्ती, द्वितीयः प्रधानाश्वस्तृतीय छत्रं, चतुर्थ' कुम्भ', पञ्चमं चामरद्वयमिमानि पञ्चरत्नानि दिव्यानि अखिले राजकुले भ्रेमुः । ततस्तानि दिव्यानि राजकुलाद्बहिर्जग्मु. । तैश्च शिविकास्थोऽसौ नन्दोऽदर्शि । तदा शारदमेघवद्गर्जित. पट्टहस्ती शुण्डमुत्थाप्य पूर्णकुम्भेन नन्दं सद्योऽभ्यषिञ्चत् । तमुत्थाप्य च सद्य' स्वस्कन्धेऽध्यरोपयत् । अश्वो हर्षान्मङ्गल प्रस्तुवन्निवाऽहेषत । छत्रञ्च प्रभाते कमलमिव सद्यो विकसितमभूत् । स्फुरायमाणौ चामरौ नृत्यन्ताविवाल्लुठताम् । तत. प्रधानपुरुषै पौरै जनपदेन च नन्दस्याभिषेकमहोत्सव. सानन्द चक्रे । वर्धमानस्वामिनिर्वाणदिनात् षष्टिवत्सर्यां व्यतीतायां नन्दो राजाऽभूत् ।

ततः केचित्सामन्ता गर्वान्धितबुद्धयो"ऽसौ नन्दो नापितपुत्र " इति हेतोस्त न नेमुः । नन्दोऽपि तेषा मनोभावं परीक्षितुमप्रकटितस्वाभिप्राय' सन् राजसभातो बहिर्द्वारि शालाया हस्तीव निर्ययौ । माता धात्री बालभृद्वा बालेन सहापि गच्छत्येव, नन्देन समं तु कोऽपि नागात् । ते सामन्ताः यथावस्थितमेव तस्थु. । पुना राजसभायामागत्य सिंहासने समुपविश्य च नन्द' स्वाऽऽरक्षकान् जगाद । " हे आरक्षकाः ! युष्माभिरमी निहन्यन्तामि "ति, किन्तु ते आरक्षका अपि परस्पर चक्षुरेव ददृशु., भूताऽऽविष्टस्यावलोकनादिव सोपेक्ष स्मितं नाटयामासुश्च । नन्दश्च आरक्षकानपि तत्सम्बन्धिनो विज्ञाय सभाद्वारद्वा'स्थौ पुत्तलकौ शीघ्रं ददर्श । कयाचिन्नन्दपुण्याऽऽकृष्टदेव्याऽधिष्ठितौ तौ लेप्यमयावपि प्रतीहारिकावाकृष्टखड्गौ दधावतुः । ताभ्या दुर्विनीतास्ते केचन सामन्ता निजघ्निरे । केऽप्यनाश्यन्त । तदनन्तर नन्दोऽप्रतिहतशासनो बभूव । यदुक्तम्—प्रायः श्लाघ्येऽपि वंशे क्लीव जन्म भवति । अतः पुण्यं पराक्रमश्च प्रमाणं, न कुलीनता ।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप-परिशिष्टपर्वण श्रीतपोगच्छाधिपति-
शासनसम्राट्-सूरिचक्रचक्रवर्ति-आचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ-शान्तमूर्ति-आचार्यश्री
विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि-प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न
व्याख्यानवाचस्पति-पन्न्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते
गद्यानुबन्धे यशोभद्रस्वर्गगमन-भद्रबाहु-अन्निकापुत्रवृत्तान्त-पाटलीपुत्रप्रवेश-उदायिनृप
मारक-नन्दराज्यलाभकीर्तनो नाम षष्ठः सर्गः ॥ ६ ॥



# सप्तमः सर्गः

## कल्पकवृत्तान्तः ।

अथ तस्मिन्नेव नन्दनृपपालिते पाटलिपुत्रपुरे बहिर्भूमावेकः कपिलनामा ब्राह्मणो न्यवसत् । एकदा तद्गृहप्रान्ते ससारगजसिंहः कश्चिदाचार्यः सपरिवार आययौ । तदा समस्तगगनोल्लङ्घनखेदादिव सूर्यः पश्चिमसागरतरङ्गजलहस्तितामगमत् । ततश्च पश्चिमदिक् नवविकसितदाडिमीपुष्पवर्णवैभवमनोहरैः सायमेघैः परिहितकौसुम्भवस्त्रेवाऽलक्षि । स्थाने स्थाने गृहाट्टदीपसमूहैर्भूमिराकाशस्पर्धया तारकितेवाऽभूत् । पक्षिणो विष्वगालोकजनक सूर्यं ' कदा पुनर्द्रक्ष्यामी 'ति कोलाहलव्याजादूचुरिव । अस्त गतेन रविणा स्वतेजो वह्नौ न्यस्तमिति मन्ये । कथमन्यथा सूर्यास्तमनानन्तर वह्निरतिप्रकाशशीलो भवेत् ? । अञ्जनाभेन नीरन्ध्रेणान्धकारेण तदाऽऽकाशं पाताल-विवरमिवाऽभूत् । रात्रौ नगरप्रवेशो दुर्लभ इति सूरयस्तस्य ब्राह्मणस्य गृहाङ्गण स्वपादैः पवित्रयामासुः । तथा निशि तं ब्राह्मणमनुज्ञाप्य तदीययज्ञशालाया न्यवात्सु । स कपिल " इम आचार्या. किमपि जानन्ति नवेति " विपरीतधीराचार्यसमीप निशि ययौ । ततः सूरि-हृदयान्तःसमुल्लसितश्रुतसागरतरङ्गोपमैर्वचनैस्तस्याग्रे धर्मं दिदेश । तेन च प्रभावित' स कपिलस्तस्यामेव रात्रौ श्रावकोऽभूत् । अथा-ऽऽचार्या' स्वैरवृत्तितयाऽन्यत्र विजह्रुः ।

अन्यदा वर्षाकाले जैनीभूतेन तेन ब्राह्मणेनाऽनुज्ञाताः तद्गृहे केचिदाचार्याः तस्थुः । अन्येद्युः कपिलस्य ब्राह्मणस्य पुत्रमुत्पेदे । स जातमात्र एव व्यन्तरीभिराक्रान्तः । मुनिभि कल्पमानपात्राणामधोभागे श्रद्धालुना तेन ब्राह्मणेन स पुत्रो दध्रे । तेषा महाप्रभावाणा-मृषीणा पात्रजलेनाभिषिक्त बाल व्यन्तर्यः शीघ्र मुमुचुः । तदा कपिलः श्रावको मुनिपात्रजलसिक्तस्य नीरोगस्य बालकस्य ' कल्पक '

इति नाम चकार । तत्प्रभृति तद्गृहे न्यूनतादोषः कदाऽपि नाभूत् । ततश्च कपिलः पुत्रसन्तानसमृद्धोऽभूत् । क्रमयोगेन मृतपितृकः कल्पकः पुरे एकः समस्तविद्यास्थानज्ञः कीर्तिपात्रमभूत् । स गर्भश्रावकत्वेन सर्वदा सन्तोष्यधिकपरिग्रहेच्छामपि न चकार । कुलीना रूपलावण्यवतीरपि कन्याः प्रार्थ्य दीयमाना अपि न परिणिनाय । कल्पको बहुश्रुतः पुरे परिभ्रमन् पौरजनानामादरणीयोऽभवत् । यतो ‘ विद्वान् सर्वत्र पूज्यते ’ ।

इतश्च तस्य कल्पकस्य गमनाऽऽगमनमार्गे एको ब्राह्मणो न्यवसत् । तस्यैका कन्याऽजनि । अत्यन्तरूपवतीमपि ताम् न कोऽप्युपायस्त । यतस्तस्या रूपलक्ष्मीर्जलोदररोगेण दूषिताऽऽसीत् । तेन हि रोगेण जलभृतइतिभाय तस्या उदरं मज्जनि । तेन सा कन्याऽपि गर्भिणीवेतस्ततश्चङ्क्रमणेऽप्यक्षमा जाता । तादृश्यपि च सा ऋतेव समये पुष्पवत्यभूत् । ततश्च विषण्णा तन्माता तत्पितुः कथयामास । तच्छ्रुत्वा ब्राह्मणो भार्यामूचे—“ अयमावयोर्दोषो यत् सा नोद्वाहिता ” । कन्याप्येषर्तुमत्यभूत् । अस्याः परिणेत्रभावाद्रजोधर्मे व्यर्थीभूते आवयो-र्भ्रूणहत्यापापमुपस्थितमिति किं कुर्मः ’ । इमां जलोदरिणीं कोऽपि न वृणुते । तस्माद्वाक्छलेन मोहयित्वा कस्मैचिदेषा कन्या दातव्या । वाक्छलेनाऽपि कल्पकं विहायान्यः कोऽपि नरो न ग्राह्यः । स एकः सत्यप्रतिज्ञोऽस्ति, अतस्तदर्थमेव प्रयतामहे । ततस्तेन ब्राह्मणेन स्वगृहाऽग्रे एका कूपिकाऽखानि । कल्पकाऽऽगमनकाले च सा कन्या तत्र न्यक्षेपि । पुनः कल्पकमागच्छन्तं दृष्ट्वा स ब्राह्मणो पूत्कार “ यो मे पुत्रीं कूपिकात उद्धरिष्यति, तस्मायेव वराय कन्यामहं दास्यामी ”ति । दयालुः कल्पकोऽपि तत्पितुरुत्तरां वाचमश्रुत्वैव शीघ्रमेव तां कन्यां कूपिकात आचकर्ष । ततस्तत्पितोवाच—“ त्वमिमां कन्यां परिणय । यतः कूपिकात उद्धारकाय मयैषोक्ते प्राक्कल्पिता, त्वयैवास्याः तदनिषेधेनैवोद्धारे प्रवृत्त इति तवैतदनुमतमेव, यतोऽ“ निषिद्धं वस्त्वनुमतं भवती ”ति न्यायो वर्तते । विद्यास्थानानां विधातेव

त्व, न्यायविज्ञशिरोमणिरसि । पुनश्च सत्यप्रतिज्ञोऽप्यसि । अतो हे भ्रातर् ! यदुचितं तत्कुरु ” इति । कल्पकोऽचिन्तयत् ‘ अनेन बुद्धि-प्रभावेण छलितोऽहमस्मि, किं करोमि ? ’ इति । एव बहु विचिन्त्य स्त्रियं परिणेतुमकामयमानोऽपि तामुद्वोढुं स्वीचकार । अथ कलाकलाप-समुद्रागस्ति स कल्पक. आयुर्वेदोक्तौषधैस्ता नीरुज कृत्वा परिणिन्ये ।

अथ नन्दनृप. कल्पकं पण्डितं मतिमन्त श्रुत्वा तमाहूय “ममाऽमात्यो भवे”ति प्रार्थयामास । कल्पको राजानमुवाच—“ राजन् ! ग्रासवस्त्रादधिकमन्यत्परिग्रहमहं नेच्छामि । किञ्च धार्मिकाणा दयालूनाममात्यव्यवहारो न निर्वहति, तस्मान्मेऽमात्यत्वेनाऽलम् ” इत्युक्त्वा कल्पकस्ता राजाज्ञामवज्ञायैव ततो जगाम । तत्प्रभृति राजा तच्छिद्राण्यन्वेषयितुमुदयतत । नन्दस्तच्छिद्रं नित्यमन्वेषयन्नपि मनागपि न प्राप । यतो निरीहाणा महात्मना छिद्रं दुर्लभ भवति । अन्यदा धीधनो राजा कल्पकगृहद्वारवीथीवासिनं स्वरजकमाहूय पप्रच्छ—“ हे रजक ! यस्तव प्रातिवेश्मिक. कल्पको ब्राह्मणोऽस्ति, तस्य वस्त्रं त्व प्रक्षालयसि न वा ? ” । प्रक्षालयामीति रजकेनोक्ते नृपस्तमुवाच—“ तदानीं तानि त्वया धर्त्तव्यानि, कल्पकाय पुनर्नार्प्यं । ” रजक “ आदेश· प्रमाणमि ” त्युक्त्वा ययौ ।

इतश्च कौमुद्युत्सवसमय आययौ । तत. कल्पकस्त्री कल्पकमुवाच—“ हे मनोरम ! इमानि सुवस्त्राणि राजरजकेनाद्य प्रक्षालय, यथाऽहं कौमुद्युत्सवदिनेऽतिशयितधवलानि सच्छायानि तानि वस्त्राणि धूपयित्वा परिदधे ” । तत कल्पकोऽचिन्तयत् “ अतिनिकटे पर्वदिने राजमासबलो रजकोऽन्यस्य भाटिलोभेन वरवस्त्राण्यर्पयेत्, मम पुनस्तानि स नार्पयिष्यति, तस्मान्महाकष्ट पराभवं स्वहस्तेन न क्रेष्ये ” इति । एवं विचिन्त्य प्रेक्षावता वर· स कल्पकः स्त्रीवचनमुपेक्षिष्ट । यतो विद्वासः स्त्रीप्रधाना न भवन्ति । किन्तु स्त्रिया-ऽत्याग्रहीतः कल्पकस्तस्या वस्त्राणि रजकस्यार्पयत् । यतः स्त्र्याग्रहो बलवान् भवत्येव ।

अथ पर्वदिने समागते उपस्थितस्य कल्पकस्य वस्त्राणि राजशासनात् रजको नाऽऽपयत् । अथ त्वं याहि, प्रातरागच्छेत्येवं मुहुस्तं प्रतारयामास । यतः स रजको राजनियोगाद्भय आसीत् । तत्प्रभृति कल्पकोऽनुदिनं वस्त्रार्थं तस्य रजकस्य गृहमुत्तमर्णस्याधमर्ण इवागात् । एवं वस्त्राणि मार्गयमाणस्य कल्पकस्य द्वे वर्षे व्यतीयतुः । यतोऽयं तदर्गिता क्षमाऽभिभवायैव भवति । ततस्तृतीये वर्षे प्रवृत्ते कल्पकोऽवदत्—" अरे ! त्वं मम वस्त्रं नीर्णवान्, अतः महान् चौरोऽसि, रे ! रजकाधम ! यद्यहं स्ववस्त्राणि त्वच्छोणितेन रञ्जयित्वा न गृह्णामि, तदाऽहं कल्पको न भवामि " ।

अन्यदा कल्पको निशि रजकगृहं गन्तुं स्वगृहाद्विधा साधयितुम् साहसीव निर्ययौ । चण्डिकाभृगुवेतालाद्यखिलमतनिपुणः स यमस्य देवतामिव क्षुरिकां दधार । ततश्चाविकुपितः कालोद्भूतो व्याघ्र इव भृकुटीकुटिलभूभीषणमुखो गत्वा रजकमुवाच—" रे दुष्ट ! तव गृहेऽहं द्वे वर्षे सेवक इव समागाम्, इदानीमपि मम वस्त्राणि ददासि न वेति ब्रूहि "। रजकस्तं क्षुधितं ब्रह्मराक्षसमिवालोक्य क्षोभमुपागतः स्वस्त्रियमुवाच—" अस्य वस्त्राणि देहि " । रजक्यपि तथा चकार । अथ कल्पकः क्षुरिकाम् प्रकटीकृत्य सिंहो लाङ्गूलमिव तां नर्तयामास । अनन्तरञ्च स कल्पकः फालेन क्षेत्रमिव तया क्षुरिकया चटचटेति कुर्वाणः रजकस्योदरं विददार । सत्यप्रतिज्ञश्च स कल्पको निर्झराज्जलेनेव रजकतुन्दान्निःसरता शोणितेन स्ववस्त्राणि रञ्जयामास । रजकी रुदती जगाद—" निरपराधमिमं कथं हसि, अयं राजाज्ञयैव तव वस्त्राणि गृहे चिरमधारयत् । " कल्पकस्तदाकर्ण्य सम्भ्रान्तः समचिन्तयत् " अहो राज्ञोऽयं प्रपञ्चोऽस्ति, यतस्तद्वचो मया नाकारि, तस्माद्यावदहं यावद्रजकवधापराधाद्राजपुरुषैर्न निगृह्ये, तावत् स्वयमेव राजसमीपं यामि " । एवं विचिन्त्य स शीघ्रं नन्दसमीपं ययौ । नन्दोऽपि सानन्दस्तं गौरवास्पदं चकार । इङ्गितज्ञशिरोमणिश्च स नन्दोऽपि साकाङ्क्षं कल्पकं ज्ञात्वा तं भृशमभ्यर्थ्योवाच—" ममामात्यपद

मादस्त्वे "ति । कालवित्सुधीः कल्पकः स्वापराधप्रतीकारं चिकीर्षू राजवचः स्वीचकार । प्रमुदितो नन्दोऽपि स्वमात्मान कृतकृत्य मन्यमान· स्वमनोमयूरमेघ कल्पक कल्पयामास । हृदयस्य शल्यभूताश्च स्वार्थसंशयानागतं विद्यागुरुमिवेष्टं कल्पक पप्रच्छ । महाबुद्धि· कल्पकोऽपि तत्कृतसन्देहलोष्टपेषणमुद्गरैर्वाक्यैर्नन्दं प्रीणयामास । तदाऽन्यायं पूत्कर्तुमागतो रजकसङ्घो राज्ञा प्रदत्तगुरुगौरवं कल्पक ददर्श । रजकास्तथास्थितं कल्पक दृष्ट्वा भयात् निवृत्य ययु· । यतोऽनर्थस्य प्रतीकारो राजमान्यता । महीपतिश्च प्राक्तनामात्यमपसार्य यथोचित मुद्राकरेण्वादि कल्पकाय ददौ । तत· स सकलनृपेभ्य आसमुद्रमपि लक्ष्मीरुपायहस्तैराकृष्य नन्दाधीना अकरोत् । लक्ष्मीवशीकारमान्त्रिके तस्मिन्नेवामात्ये नन्दनृपस्य लक्ष्मीर्निर्झरवारिवदक्षयाऽभूत् । तस्य बुद्धिजलेन सिक्तो राजविक्रमवृक्षः सुरभीकृतभुवनं यश·पुष्प सुषुवे । नन्दराजप्रतापाग्नेः परा वृद्धिमुत्पादयन् सचिवस्य बुद्धिप्रपञ्चो महापवनोऽनुदिन ववौ ।

इतश्च परिभ्रष्ट· पुरातनमन्त्री तटस्थोऽपि भूत इव कल्पकस्य छिद्र गवेषयामास । स दुष्टस्तत्प्रवृत्तिजिज्ञासया कल्पकचेटीं वस्त्राभरणादिभिरावर्जयितुमारेभे । साऽपि लोभाभिभूतात्मा कल्पकगृहे प्रतिदिन क्रियमाणं कथ्यमानञ्च पुरातनमन्त्रिणः कथयामास । कल्पकस्य बहवः पुत्रा बभूवुः । यतः परमार्हताः प्रायेण पुत्रवन्तो भवन्ति । एकदा स एकस्य पुत्रस्य विवाहमङ्गलमारेभे । तदा तत्र सान्तःपुरं राजानं निमन्त्रयितुमिच्छन् स राज्ञ· स्वागतचिकीर्षया तद्योग्यान् मुकुटच्छत्रचामरान् कारयितुमारेभे । तत्सर्वं तथैव कल्पकचेटी स्थानच्युतामात्याय कथयामास । " मयाऽवसरो लब्ध " इति विचार्य सोऽपि भूपं शीघ्र व्यजिज्ञपत् । तथाहि–" हे राजन् ! अह साम्प्रतममात्यो नास्मि, नापि च तव मान्योऽस्मि, तथाप्यह कुलीनोऽस्मि, अतः स्वामिनो हित वच्मि, यत् त्वत्प्रियमन्त्रिणा कल्पकेन यदारब्धम् तच्छृणु, अधुना स छत्रादीन् राजाऽलङ्कारान् कारयति । प्रभु· स्वय ममैतत्कथनेन तदाशय जानीताम् । यत एक कणेनाऽपि

बुद्धिमन्तो द्रोणपरिमिततण्डुलादेः पाकं जानन्ति । स्वामिदत्तेन ग्रासेन वर्धितोऽस्मीति तव हितमिदं वच्मि । न पुनः कल्पके
स्थानापहरणप्रयुक्ता शत्रुताऽस्ति । अहं कदाचिन्मत्सरेणासत्यमपि कथयामि, तथापि सत्यं मिथ्या वा तदिति चरैर्विद्धि यतो राजानश्चर
चक्षुषो भवन्ति इति " । ततो राज्ञा प्रेषिताश्चरा कल्पकगृहे गत्वा तदुदितं दृष्ट्वा च राज्ञेऽकथयन् । ततो नन्दनृपेण सकुटुम्बोऽपि
कल्पकोऽन्धकूपकारायां सतिरस्कारं सद्यश्चिक्षिपे । भोजनार्थञ्च सपरिवाराय कल्पकाय प्रसृतिद्वयपरिमितं कोद्रवौदनम्, पयः कमण्डलुश्चैकं
कूपेऽक्षेपयत् । कल्पकोऽल्पमन्नं दृष्ट्वा कुटुम्बमिदमुवाच । "अस्यान्नस्य कणशोऽपि विभागो दुष्करः, कवलानां तु का कथा ?, यत्र
उदरपूर्तिं कवलशतेन भवेत्, तत्कणमात्राणि भुञ्जाना यूयं सर्वे मरिष्यथ । तस्मात् स एवैकः समस्तं कोद्रवौदनं भुङ्क्तां, यो भ्रष्टमन्त्रिणो
वैरशोधनाय समर्थो भवेत् ।" कुटुम्बो मिलित्वोवाच—"त्वं भुङ्क्ष्व, तव क्षेममस्तु, हे पितः ! अस्मासु वैरनिर्यातनं कर्तुं कोऽपि
समर्थो नास्ति ।" ततः कल्पकस्तत्र प्रतिदिनमभुङ्क्त । अन्येस्त्वनशनं कृत्वा स्वर्गं ययुः । ततः ज्ञातकल्पकमरणाः सामन्तनृपा
नन्दोन्मूलनेच्छया पाटलिपुत्रं रुरुधुः । प्रतिदिनं रुद्धद्वारे पाटलिपुत्रनगरे भीतानां पौराणां भाण्डेन भाण्डं पुस्फोट । तेषां शत्रूणां
शासनेऽशक्तो नन्दो दाहज्वरार्त इवासने शयनेऽपि वा निर्वृतिं न लेभे । सोऽचिन्तयत्—"यावन्मम मन्त्री कल्पक आसीत्तावत्—
सिंहगुहेव पुरं केनचिदपि नाऽऽक्रान्तमभूत्, कल्पकं विना नगरस्येदृशी दशाऽभूत्, यतो विना रक्षकमुपवनं पथिकैरप्युपजीव्यते ।
स जीवति यदि तदा तेनैव पुरं नष्टवेष्टनं क्रियते, यतो हस्तिमारो हस्तिभिरेव प्रायेण कृष्यते ।" राज्ञा काराधिकारिणः पृष्टा एव विज्ञापया
मासुः—"कोऽप्यन्धकूपस्थितोऽद्यापि कोद्रवान् गृह्णाति ।" नन्दः कूपे मञ्चिकां क्षिप्त्वा तत्र कल्पकमारोप्य तदैव स्वनिधिमिव तमा
कर्षयत् । पक्वतरुपत्रसदृशमपि तं शिबिकायामारोप्य पुरदेवतामिव वप्रस्योपरि नन्दोऽभ्रमयत् । वैरिणस्तं दृष्ट्वाऽचिन्तयन्—"नन्दः मायेना

बलोऽभूत्, यत एष कल्पितकल्पकं सम्प्रत्यस्मान् दर्शयन् भीषयते । ततस्ते शत्रवोऽनुत्पन्नभया यन्त्रप्रतियन्त्रादिकल्पनैर्नन्दमत्यन्तमुपद्रोतुं प्रावृतन् । ततः कल्पको दूतं प्रेष्य ताञ्छत्रूनेवं प्रोवाच—" युष्माकं कोऽप्यभिमतो गङ्गामध्ये नौकास्थ आगच्छतु, यथाऽहमपि नौयानस्तेन धीमता सह वार्तां कृत्वा कथयित्वा सन्धिं करोमि, यद्वा यदन्यदभिलषितं तत् करोमि । " तेषां शत्रूणां सान्धिविग्रहिकः कल्पकश्च द्वौ नौस्थितावाभिमुख्येन वक्रावक्रमहाविव मिलितौ । तत्र कल्पको मन्त्री कस्यचिदेकस्य करस्थितमिक्षुपुञ्जं दृष्ट्वाऽङ्गुलिचेष्टया तमुवाच—" यद्यस्येक्षुभारस्य मूलं प्रान्तश्च कर्त्यते तदैतन्मध्यप्रदेशस्य किं तिष्ठति ' । अथ विद्वानपि सुधीरपि स सान्धिविग्रहिकस्तदाशयं नाज्ञासीत् । तदाशय ईदृशो हि—इक्षुयष्टिर्यथा मूलेन प्रान्तेन च विवर्धते, क्षत्रियसन्ततिस्तथा द्वाभ्यां सन्धिभ्यां विवर्धते । तत्रैकः सत्यसन्धिर्यत्रोक्तमन्यथा न भवेत् । द्वितीयश्च प्रपञ्चसन्धिः, यो मायया प्रतन्यते । नन्देऽविश्वासेन युष्माकं सत्यसन्धेर्विषयो नास्ति । प्रपञ्चसन्धिर्युष्माकं कथंभावी तद्विद्धि मयि । तस्माद् यूयं निःसन्धिबन्धा नन्दभूपतेर्निकृत्तमूलप्रान्तेक्षुदण्डवदुपजीव्या भविष्यथ । पुनश्च कल्पको हस्तचेष्टया तत्प्रदेशस्थगोपालिकामूर्धनि दण्डाहतां दधिस्थालीं दर्शयामास । स राजपुरुषः प्राग्वत् तद्भावार्थं नाज्ञासीत् । पुनः कल्पकमन्त्रिहृदयभावार्थोऽयमासीत्—तथाहि—" यदि त्वत्पक्षसंहतिस्थाली मद्दोर्दण्डहता भवेत्, तदा वो बलं दधिवज्जारपुरुषरूपकाकयोग्यं विकीर्णं भवेत् । " पुनः कल्पकः स्वनावा तदीयनावं त्रिः प्रदक्षिणां चकार । तत्रापि स तदभिप्रायं नाज्ञासीत् । तद्भावार्थोऽयमासीत्—" यथा मन्नावा त्वन्नौरावृता, तथाऽस्मत्तेजसा भवतां तेज आवरिष्यते । " स कल्पकस्य संज्ञात्रयेऽपि भावार्थमजानान ऊहापोहपरः काकपोतवद् व्यात्तमुखस्तस्थौ । अथ कल्पकः स्वस्थानमगात् । स सान्धिविग्रहिकस्तु तद्भावमविदन् विलक्षः स्वशिबिरं ययौ । स सान्धिविग्रहिकः स्वैः पृष्टो व्यषीदत्, अवोचच्च कल्पकद्विजोऽसम्बद्धप्रलापी वर्तते । तैः पुनः पुनः पृष्टः स न किञ्चिदपि जगाद ।

तन्नाव नाज्ञासिषमिति ब्रुवन् स जिह्राय । कल्पकेनाऽयं मे सान्धिविग्रहिको मिलितोऽस्तीति निश्चित्य ते सामन्तभूपतयो दिशो दिश पलायन्त । तत्र पलायमानानां तेषां हस्त्यश्वरत्नकोशादि कल्पकशासनान्नन्दराज आच्छिद्य जग्राह । नन्दोऽपि प्राक्तन दुष्टमन्त्रिण भक्तस्य कल्पकस्यायमनर्थकारीति क्रोधेन निजग्राह ।

नन्दश्रियां पालने अन्तःपुररक्षक इव सुधीर्नयोपायनदीसमुद्रो मन्त्रिवरः कल्पकः पृथिवीं नन्दनृपाज्ञानियन्त्रितां चकार ॥ १२८ ॥

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूपपरिशिष्टपर्वणः श्रीतपोगच्छाधिपति-शासनसम्राट्-सूरिचक्रचक्रवर्ति-आचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ-शान्तमूर्ति-आचार्यश्री विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि-प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न व्याख्यानवाचस्पति-पन्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते गद्यानुवादे कल्पकामात्यसङ्कीर्तनो नाम सप्तमः सर्गः ॥ ७ ॥



## अष्टमः सर्गः ८।

### शकटालमन्त्रिणः श्रीस्थूलभद्रस्य च वृत्तान्तः

धीनिधिः पुनरुत्पन्नानेकपुत्रः स कल्पको नन्दनृपस्य मुद्राव्यापारं सुचिरमन्वशात्। कालक्रमेण नन्दवंशे सप्तनन्दा राजानोऽभूवन्। तेषां मन्त्रिणः कल्पकवंशोद्भवा बभूवुः। ततस्त्रिखण्डपृथिवीपतिः श्रीपतिरिवोन्मूलितद्विपत्कन्दो नन्दो नवमो राजा बभूव। विशालः श्रीमान् सङ्कटरहितो धीमान् कल्पकवंशोत्पन्नः शकडाल इति नवमनन्दराजस्य मन्त्री बभूव। तस्य लक्ष्मीरिव वपुष्मती शीलालङ्कारधारिणी लक्ष्मीवतीनाम्नी पत्नी बभूव, तयोः विनयी सूक्ष्मबुद्धिः चन्द्र इव स्थूलभद्रनामा ज्येष्ठः पुत्रोऽभूत्। तथा तयोर्भक्तो नन्दनृपहृदयामन्दानन्दगोशीर्षचन्दनः श्रीयको नाम कनिष्ठो नन्दनोऽभूत्। तत्र पुरे एका वेश्या रूपश्रियोर्वशीव वशीकृतजगच्चेता जीवनौषधिः कोशानाम्नी बभूव। तस्या गृहे तन्मनाः स्थूलभद्रो द्वादशवर्षाणि दिवानिशं विविधान् भोगान् भुञ्जानो न्यवात्सीत्। नन्दराजस्य द्वितीयहृदयमिव विश्वासपात्रं श्रीयकोऽङ्गरक्षको बभूव।

तत्र कवीनां वादिनां वैयाकरणानां च शिरोमणिः वररुचिनामा ब्राह्मण आसीत्। स सुधी राजानुरञ्जनेऽनुदिनं स्वकृतैर्नवनवैरष्टोत्तरशतेन वृत्तैः प्रववृते, मिथ्यादृष्टिरिति मन्त्री तं कदापि न प्रशशंस। ततस्तुष्टोऽपि राजाऽस्मै तुष्टिदानं न ददौ तत्र वररुचिर्दानाप्रापणकारणं ज्ञात्वा तस्य मन्त्रिणः स्त्रियमाराधयितुं प्रारेभे अन्यदिने संतुष्टया तया कार्यं पृष्टो वररुचिरुवाच—“ तव स्वामी राजसमीपे मम काव्यं प्रशंसतु ” तदनुरोधेन तया विज्ञप्तः पतिरुवाच—“ मिथ्यादृष्टेरस्य वचनं कथमहं प्रशंसामि ” तया साऽऽग्रहमुक्तो मन्त्री तद्वचस्तथा स्वीचकार। यतोऽन्धस्त्रीबालमूर्खाणामाग्रहोऽतिशयितो बलवान् भवति। ततो राज्ञोऽग्रे काव्यं पठतो वररुचेर्मन्त्रिवरोऽह्नो

सुभाषितमिति प्रशशस । ततो नरेशोऽष्टोत्तरशत दीनारमस्मै ददौ । यतो राजमान्यस्यानुकूलया वाचाऽपि जीव्यते । प्रतिदिनमष्टोत्तरशते दीनारे दीयमाने किमेतद्दीयत इति मन्त्री राजान विज्ञापयामास । राजोवाच—' हे मन्त्रिन् ! अह च त्वत्प्रशसयाऽस्मै ददामि, यद्यह स्वय ददामि, तर्हि पुरा कथ न ददामि, मन्त्र्युवाच—" हे देव ! मयाऽस्य प्रशसा न कृता । तदाऽह परकाव्यानि प्राशसिषम् । अय परकाव्यान्यस्माकमग्रे स्वीकृत्य पठति । " ततो राजा किमेतत्सत्यमिति पप्रच्छ । " एतत्पठितकाव्यानि पठन्ती कन्या अपि च प्रात र्दर्शयिष्यामि " इति मन्त्री जगाद ।

अथ मन्त्रिण सप्त कन्या आसन्— यक्षा १ यक्षदत्ता २ भूता ३ भूतदत्ता ४ एणिका ५ वेणा ६ रेणा ७ एता सर्वा विदुष्य आसन् । तासा सर्वज्येष्ठा सकृदुक्त धारयति स्म, इतरा यथाक्रम द्वित्रादिवारक्रमाद् गृह्णन्ति स्म । मन्त्री ता कन्या राजसमीप द्वितीयदिने निनाय । स ताश्च जवनिकान्तरितास्तत्र समुपावेशयत् । ततो वररुचिर्नित्यमिवाष्टोत्तरशत श्लोकान् विरचय्य राजाग्रे जगाद । तास्तु कन्यास्तान् यथा ज्येष्ठमन्वपादिषु । ततो वररुचे रुष्टो राजा दान न्यवारयत् । यत सचिवानामुपाया निग्रहानुग्रहसमर्था भवन्ति ।

ततो वररुचिर्गङ्गातटे गत्वा तज्जले यन्त्र व्यधात् । तन्मध्येऽष्टोत्तरशत दीनारे वस्त्रबद्धमस्थापयत् । असौ प्रात काले गङ्गा स्तुत्वा पादेन यन्त्रमाक्राम्यत् । ततस्ते दीनारास्तत्पाणौ समुत्पत्य न्यपतन् । स एव नित्य चकार तेन लोको विस्मय प्राप । तच्च राजा जन श्रुत्या श्रुत्वा मन्त्रिणे कथयामास । " यदीद सत्यमस्ति तर्हि प्रातर्वय स्वय पश्याम " इति मन्त्रिणोक्तो राजा तत्तथा स्वीकार । मन्त्रिणा चर शिक्षयित्वा प्रेषितस्तत्र । स शरस्तम्बविलीन पक्षीवानुपलक्षितोऽस्थात् । तदा वररुचिर्गङ्गाजले प्रच्छन्नीभूय गत्वा दीनाराष्टोत्तरशतग्रन्थि निधाय गृह ययौ । ततश्च चरस्तदादाय वरमन्त्रिणे प्रच्छन्न समर्पयामास ।

अथ मन्त्री रात्रौ व्यतीताया गुप्तगृहीतदीनारग्रन्थिर्भूपेन सह गङ्गा ययौ। तदा वररुचिरपि गङ्गामागच्छत्। ततो मूढो वररुचिर्द्रष्टुकाम राजानं दृष्ट्वोत्कृष्टमानी गङ्गा सविस्तर स्तोतु प्रावर्तत। यदा वररुचिः स्तवान्ते पादेन यन्त्रमचालयत्तदा तदञ्जलौ दीनारग्रन्थिरुत्पत्य नापतत्। ततः स गङ्गाजले करेण ग्रन्थिमन्वेषयामास। स तं ग्रन्थिमपश्यस्तूष्णीकोऽस्थात्। यतो धृष्टो धूर्तो मौनभाग् भवति। तदा मन्त्रीत्युवाच–"किन्तेऽद्य जाह्नवी न्यासीकृतमपि द्रव्य न ददाति, पुनःपुनरन्वेषयसि, उपलक्ष्येद स्वद्रव्य गृहाण" इति कथयन् स वररुचिहस्ते दीनारग्रन्थिमर्पयामास। तेन दीनारग्रन्थिनोत्सर्पद्धृदयग्रन्थिनेव स मरणादपि दु.सहा दशा प्राप। असौ लोकं प्रतारयितु साय द्रव्य तत्र क्षिपति, प्रातर्गृह्णातीति मन्त्री राजानमुवाच। राजा–'इदं छद्म साधु जातमि'ति मन्त्रिवरं निगदन् विस्मयस्मेरनेत्रः स्वगृहं ययौ। अमर्षणो वररुचिः प्रतीकारं विचिन्तयन् चेटिकादिकं मन्त्रिणो गृहस्वरूपं पप्रच्छ। चेटी तस्येदं प्रोवाच–"श्रीयकविवाहे राजा मन्त्रिगृहे भोक्ष्यते। मन्त्रिणा नन्दाय दातुमत्र शस्त्रादि सज्ज्यते, यतः शस्त्रप्रियाणा राज्ञा शस्त्रमाद्यमुपायन भवति। ततश्छलज्ञो वररुचिश्छलं समासाद्य चणकादि दत्त्वा आवर्ज्य डिम्भानि स्वपाठयत्–राजा तन्न जानाति यत् शकटालः करिष्यति। नन्द हत्वा तद्राज्ये श्रीयक स्थापयिष्यति" स्थाने स्थाने प्रतिदिनमेवं बालकाः पेठुः। जनश्रुत्या राजेदमश्रौषीत्, अचिचिन्तच्च–"यद् बालका भाषन्ते, यच्च स्त्रियो भाषन्ते, या चौत्पातिकी भाषा, साऽन्यथा न भवति।"

अथ राज्ञा तत्प्रत्ययार्थं राजपुरुषः प्रेषितस्तद्गृहे गत्वा यथा दृष्ट सर्वं तत् समागत्य राज्ञे व्यजिज्ञपत्। ततः सेवावसरे समागतस्य प्रणाम कुर्वतो मन्त्रिणो राजा पराङ्मुखस्तस्थौ। अथ तद्भावज्ञोऽमात्यो गृहमेत्य श्रीयकमुवाच–"राज्ञ. केनापि विद्विषन्निव अभक्तः ज्ञापितोऽस्मि, अस्माकमकस्मात् कुलक्षय उपस्थितः। हे वत्स! मदीयं ममादेश त्व कुरुषे तदाऽयं कुलक्षयो निवार्यते। अहं यदा

राज्ञे शिरो नमयामि तदा त्व मे शिर खड्गेन छिन्धा, ततस्त्व स्वाम्यभक्त पिताऽपि वध्य " इति वदे । तत स्व जरसा परलोक जिगमिषो मयि मृते चिरं मत्कुलगृहस्तम्भो भविष्यसि । " श्रीयकोऽपि रुदन्नेव गद्गदस्वरमुवाच–" हे पितरिद घोरं कर्म श्वपचोऽपि किं करोति ? । " मन्त्र्यप्येवमुवाच–" एव विचारयस्त्व शत्रूणामेव केवल मनोरथान् पूरयसि । यम इवोद्दण्डो राजा यावत् सकुटुम्ब मां हन्ति, तावन्ममैकस्य नाशात् कुटुम्ब त्व रक्ष । अह तालपुट विष मुखे न्यस्य भूपतिं नस्यामि परासोर्मे शिरस्त्व छिन्धास्ततः पितृहत्या ते न भविष्यति । " ततस्तातेनैव बोधित स तत्स्वीचकार, चकार च । धीमन्तो हि शुभपरिणामाय दारुणमिव लक्ष्यमाण मपि कर्म कुर्वन्ति ।

हे वत्स ! त्वया किमिद घोरं " कर्म व्यधायि " इति नृपेण ससम्भ्रम प्रोक्त श्रीयक उवाच–" यदेवाय स्वामिना द्रोही ज्ञातस्तदैव स निहत", यतो भृत्यानां स्वामिचित्तानुसारेण प्रवर्तन भवति । भृत्याना दोषे स्वय ज्ञाते विचारो युज्यते, स्वामिना ज्ञाते तु न विचार उचित " ।

ततो नन्दराज कृततातौर्ध्वदेहिक श्रीयकमुवाच–सर्वव्यापारयुतेय मुद्रा त्वया गृह्यताम् । " अथ श्रीयको राजान प्रणम्योवाच– " मम ज्येष्ठभ्राता पितृसम स्थूलभद्रनामाऽस्ति । कोशाया गृहे पितृप्रसादान्निर्बाध भोगानुपभुञ्जानस्य तस्य द्वादश वर्षाणि व्यतीयु । राज्ञाऽऽहूय स स्थूलभद्र आदिष्टो'ऽमुमर्थं पर्यालोच्य करिष्यामी'त्युवाच । राज्ञाऽथैव पर्यालोचयेत्युक्त स्थूलभद्रोऽशोकवनिका गत्वा चेतसेति व्यमृशद्, नियोगिभिर्जनै नारकैरिव शयन भोजन स्नानमन्येऽपि सुखहेतव उचितसमये नानुभूयन्ते । नियोगिना स्वपरराज्य चिन्ताकुलचेतसि पूर्णघटे जलानामिव प्रियाणामवकाशो न भवेत् । सर्वमपि स्वार्थं त्यक्त्वा राजार्थं कुर्वतामपि उद्वृद्धानां काका इव

पिशुना उपद्रवन्ति । यथा राजार्थे स्वदेहद्रव्यव्ययेनापि प्रयत्यते, तथा धीमता स्वार्थे किं न प्रयत्यते ? । " एवं विचिन्त्य स पञ्च-मुष्टिभि. केशोत्पाटन चकार । अथ रत्नकम्बलदशाभी रजोहरणमपि चकार, तत स महाभागः सभाया राजानमुपगम्यालोचितमिद-मित्युत्क्वा–" धर्मलाभोऽस्तु " इत्युवाच । ततो गुहायाः सिंह इव महासारः संसारगजरोषणः स राजगृहान्नि.ससार । किमेषच्छल विधाय वेश्यागृह यातीति अप्रत्ययाद् राजा गवाक्षेणापश्यत् । शवदुर्गन्धेऽपि प्रदेशेऽनाच्छादितनासिक यान्त स्थूलभद्र दृष्ट्वा राजा शिरोऽधूनयत् । अहो अय भगवान् वीतरागोऽस्ति, मा धिग् यदस्मिन् मया कुचिन्तितम् । नन्दस्तमभिनन्दयन् स्वमुच्चैर्निनिन्द । स्थूलभद्रोऽपि श्रीसम्भूतिविजयपार्श्वे गत्वा सामायिकोच्चारपुरस्सरं दीक्षामग्रहीत् । ततो नन्दो राजा श्रीयक हस्ते गृहीत्वा नि.शेषव्यापारे मुद्राधिकारे सगौरव स्थापयामास । श्रीयकोऽपि सावधानः प्रकृष्टनयपाटवात् साक्षाच्छकटाल इव सदा राज्यचिन्ता चकार । विनीतः स कोशाया वेश्याया गृहे नित्यमपि ययौ । कुलीनैर्भ्रातु स्नेहात् तत्प्रियाऽपि वहु मन्यते । स्थूलभद्रवियोगपीडिता सा श्रीयक दृष्ट्वा रुरोद, यत इष्टजने दृष्टे सति दुःखपीडिता दु.ख धर्तुं न शक्नुवन्ति । तत. श्रीयकस्तामुवाच–" हे आर्ये ! वय किं कुर्मः ? असौ पापो वररुचिरस्माक पितरमघातयत्, समयोत्पन्नवज्राग्निप्रदीपनवत् तव स्थूलभद्रवियोग च सम्पादयामास । हे मनस्विनि ! असौ खलो यावत् तव भगिन्यामुपकोशायामनुरक्तोऽस्ति तावत् कश्चित्प्रतीकारं त्व चिन्तय । तस्मात्त्व तामादिश यत् कथमप्यसौ वररुचिर्मद्यपान-रुचिस्त्वया विधीयतामिति । ततः साऽतिप्रियवियोगाद्वैराद्देवरस्य चातुर्यात् तत् प्रतिज्ञायोपकोशा समादिदेश । कोशानिदेशेनोपकोशा तं तथाऽकथयत् यथाऽसौ सुरा पपौ । स्त्रीपराधीनैः किं न क्रियते ? । वररुचिर्भ्रष्टोऽथ मद्यपान स्वैर कारित. " इत्युपकोशा रात्र्यतिगमे कोशायै कथयामास । अथ श्रीयकोऽपि तत् कोशामुखात् सर्वमशृणोत्, अमन्यत च " पितृवैरस्य प्रतीकारो विहित " इति ॥

-११५)।

शकटालमहासचिवमरणात्प्रभृति सोऽपि वररुचिभट्टो राजसेवावसरतत्परो बभूव । स प्रतिदिन राजकुले सेवासमये गच्छन् राज्ञा राजपुरुषादिभिश्च सगौरवमदृश्यत । अन्यदा नन्दनृपो मन्त्रिगुणस्मरणविह्वल सभायां श्रीयकसचिव सगद्गदमेवमुवाच–" इन्द्रस्य बृहस्पतिरिव भक्तिमान् शक्तिमान् धीमान् शकटालो मे मन्त्रीबभूव । असौ दैवान्मृत अह किं करोमि । तेन विना स्वस्थान शून्यमिवाह मन्ये ।" श्रीयकोऽप्येवमवोचत्–" हे राजन् ! इह किं विदध्महे ' मद्यपायी वररुचिरिद सर्वमकार्षीत् । सत्यमेव वररुचिर्मद्य पिबतीति राज्ञोक्ते श्रीयकोऽस्तु श्वो दर्शयितास्मीति प्रत्युवाच । श्रीयको द्वितीयदिने सभा गतानां सर्वेषा शिक्षितेन स्वपुरुषेणोत्तममेकैक कमलमर्पयामास । तदा मदनफलरसभावित कमल दुष्टवररुचेरर्पयामास कुतस्त्य 'विलक्षणामोदमिति वर्णयन्तो राजादय स्व स्व कमल घ्रातु नासाग्रे निन्यु । स भट्टोऽपि स्वकमल घ्रातु नासाग्रेऽनैषीत् । ततो रात्रिपीतां चन्द्रहाससुरा स सद्योऽवमत् । अमु मद्यप ब्राह्मणाधम बन्धवधयोग्य धिक् इति सर्वैराक्रुश्यमानो वररुचि सभातो नि ससार । तेन याचिता ब्राह्मणा तापितत्रपुण पान मद्यपानपापनाशक प्रायश्चित्तमुपादिशन् । वररुचिर्नृपया तापित त्रपु पपौ, ततस्तत्प्रदाहभयादिव स प्राणै सद्योऽमुच्यत ।

श्रुतसागरपारङ्गत स्थूलभद्रोऽपि सम्भूतविजयाचार्यपार्श्वे प्रव्रज्यां पालयामास । अन्यदा वर्षासमये समागते मुनय सम्भूतविजय गुरु मस्तकेन प्रणम्येत्यभिग्रहानग्रहीषु । तत्रैको मुनि —" अह सिंहगुहाद्वारे कृतकायोत्सर्ग उपोषितश्चतुर्मासीमवस्थास्ये द्वितीयो मुनिः–अह दृष्टिविषसर्पबिलद्वारे कृतकायोत्सर्ग उपोषितश्चतुर्मासी यावत् स्थास्यामि, " तृतीयो मुनि – ' कृतकायोत्सर्ग उपोषित कूप मण्डूकासने चतुर्मासी स्थास्यामीति स्वीचकार । गुरुर्यावद्योग्यान्स्तान्मुनीननुमेने तावत् स्थूलभद्रो गुरुमुपेत्य नत्वैवमुवाच–' हे प्रभो ! कोशावेश्यागृहे या विचित्रकामशास्त्रोक्तकरणालेख्यवती चित्रशालाऽस्ति तत्र कृततप कर्मविशेष षड्रसान् भुञ्जानश्चतुरो मासानह

स्थास्यामीत्यभिग्रहो मे" गुरुरुपयोगाच्च योग्य मत्वाऽनुमेने। तत सर्वे साधव प्रतिज्ञात स्व स्व स्थान जग्मु। त्रयोऽमी सिंहसर्पारघट्टका· शान्तास्तीव्रतपोनिष्ठास्तान् मुनिवरान् दृष्ट्वा शान्तिमशिश्रियन्। स्थूलभद्रोऽपि कोशावेश्यालय जगाम। कोशाऽपि तदग्रत· कृताञ्जलिरभ्युदस्यात्। असौ प्रकृत्या रम्भास्तम्भ इव सुकुमार उरुणा व्रतभारेण खिन्नोऽत्रागच्छदिति विचिन्त्य सा जगाद–"स्वामिन्! तव स्वागतमस्तु, समादिश, तव कृतेऽहं किं करोमि? यतो मम शरीरं धनं परिजनं सर्वमेतत् तवैव।" तत· स्थूलभद्रोऽपि चतुर्मासीं निवासायेय चित्रशाला मेऽर्प्यताम्" इत्युवाच। साऽप्यूचे–"गृह्यतामिति, भगवानपि स्वबलवत्तया कामस्थाने धर्म इव तया परिष्कृताया चित्रशालाया प्राविशत्। अथ सा षड्रसाहारभोजनानन्तर मुनेः क्षोभाय कृतविलक्षणशृङ्गारा समुपाययौ। तस्याग्र उपविष्टा सा काचिदप्सरा इव मुहुर्हावभावादिक सम्यक् चकार। पुन सा प्राक्तनानि तानि तानि करणानुभवक्रीडोद्दामानि सुरतानि वारं वारं स्मारयामास। तया तस्मिन् मुनिवरे क्षोभाय यद्यद् विदधौ तत्तद्वज्रे नखविलेखनमिव व्यर्थमभूत्। सा प्रतिदिन त मुनिं क्षोभयितु प्रायतिष्ट। किन्तु महामना· स मुनिवरो मनागपि नाक्षुभ्यत्, प्रत्युतोपसर्गकारिण्या तया महामुनेर्ध्यानानलो जलेन मेघवह्निरिव प्रादीप्यत। ततो–"हे प्रभो! त्वयि पूर्वमिव रन्तुकामा मा धिक्" इत्यात्मान निन्दन्ती सा तस्य चरणकमलयोरपतत्। सा तस्य मुनेरिन्द्रियविजयप्रकर्षेण चमत्कृता श्रावकत्वं प्रपेदे, इममभिग्रहं चाग्रहीत्–"राजा यदि मा तुष्टः सन् कस्मैचिद्ददाति तदा तमेकं पुरुषं विनाऽन्यं न सेविष्ये, इति मे नियमः"।

अथ वर्षासमये व्यतीते त्रयोऽपि साधवो निर्व्यूढाभिग्रहा· क्रमाद् गुरुपादसमीप समुपागमन्। सिंहगुहासाधुरागच्छन् 'अहो दुष्कर-कारक' इति सूरिणा किञ्चिदुत्थाय स्वागतमूचे। तथाऽन्यावपि समायान्तौ सूरिणोक्तौ, प्रतिज्ञानिर्वाहे समानौ स्तः, स्वामिसत्कारोऽपि तुल्य एवास्ति। अथ स्थूलभद्र समायान्त दृष्ट्वा गुरुरुत्थायाब्रवीत्–"हे दुष्करदुष्करकारिन्! तव स्वागतमस्तु"। अथ ते साधवः

सासूया इत्यचिन्तयन्–" गुरोरिदमामन्त्रण मन्त्रिपुत्रताहेतुकं प्रतिभाति । यद्यसौ षड्रसाहारात् कृतदुष्करदुष्करो गीयते, तर्हि वयं द्वितीयवर्षे वेश्यागृहेऽवस्थानं प्रतिज्ञास्यामहे ।" सामर्षास्ते महर्षय एव हृदि संस्थाप्य संयमं कुर्वाणा क्रमादष्टौ मासानयापयन् ।

उत्तमर्ण इव काले प्राप्ते गुरोरग्रे हृष्टः सिंहगुहावासी साधुरिति प्रतिज्ञामकार्षीत्–" हे भगवन् ! इमां चतुर्मासीमहं कोशावेश्यागृहे नित्यं षड्विधाहारं भुञ्जानः समवस्थास्ये । गुरुरुपयोगेन स्थूलभद्रेण मात्सर्यादेतत् स्वीकरोत्ययम् " इत्यवगम्य समादिशत्–" हे भद्र ! अतिदुष्करदुष्करमभिग्रहं न कुरु, गिरिराज इव स्थिरः स्थूलभद्रस्तु तत्कर्तुं समर्थोऽस्ति ।' ततो नहि मे दुष्करोऽप्येषोऽस्ति तर्हि कथं दुष्करदुष्करो भवितुमर्हति तदहमवश्यं करिष्यामि" इति स गुरुं प्रत्युवाच । गुरुरुवाच–' अनेनाभिग्रहेण प्राक्तनस्यापि तपसस्ते भ्रंशो भविष्यति ।" यतः आरोपितोऽतिभारो देहभङ्गाय जायते ।"

स मुनिर्गुरुवचनमनादृत्य वीरंमन्यः कोशावेश्यायाः कामकलापरिपूर्णं तन्निकेतनं जगाम । असौ तपस्वी स्थूलभद्रस्पर्धयाऽत्रागच्छतीति मत्वा भवे पतन्नयं मया रक्षणीय इत्युत्थाय सा ननाम । सा वेश्या तेन मुनिना निवासाय प्रार्थिता चित्रशालां तस्मै ददौ । स च मुनिस्तत्र प्राविशत् । लावण्यकोशभूता कोशाऽपि मध्याह्ने भुक्तषड्रसाहारं तं परीक्षितुं समाययौ । स कमलाक्षीं कोशां दृष्ट्वा शीघ्रं चुक्षोभ । तादृशी स्त्री भोजनं च तादृशं किं विकाराय न भवेत् ? कोशाऽपि कामपीडया याचमानं तमेवमुवाच–" हे भगवन् ! वयं वेश्या धनदानतो वश्या स्म, मुनिरप्येवमुवाच– ' हे मृगनेत्रे ! प्रसीद वालुकासु तैलमिवास्मासु किं द्रव्यं भवति ? ततः सा नवीनाय साधवे नेपालभूपालो रत्नकम्बलं वितरति तमानय ' इति मुनिं निर्वेदं प्रापयितुमुवाच, ततः स मुनिः निजव्रतमिव स्खलन् प्रावृट्कालेऽपि पङ्किलायां भूमौ बालवत् चचाल । तत्र गत्वा च राज्ञो रत्नकम्बलं प्राप्य वलितः । तस्मिन् मार्गे दस्यव आसन् । ततो

दस्यूना शकुनिरित्युवाच—'लक्षमायाति'। दस्युराजः किमायातीति वृक्षस्थितं नरमपृच्छत्, स द्रुमारूढो नरः—'एको भिक्षुक आगच्छन्नस्ति' कश्चिचादृशोऽन्यो नास्तीति चौरसेनापत्यग्रे जगाद। अथ साधुस्तत्र सम्प्राप्तः, तैश्चौरैर्विधृत्य निरूपितः, किमपि धनं तत्साधु पार्श्वे न दृष्ट्वा साधुस्तैर्मुमुचे। पक्षी पुनरेतल्लक्ष प्रयातीति व्याजहार। ततश्चौरपतिरुवाच—"साधो! त्व सत्यं ब्रूहि किमपि ते पार्श्वे धनमस्ति?"। तत साधुः—"वेश्यार्थोऽय रत्नकम्बलो वशमध्ये निक्षिप्तोऽस्ति" इत्युवाच। ततः स चौरराजेन मुमुचे। स साधुस्तत समागत्य कोशायै त रत्नकम्बल ददौ। सा गृहस्रोतःपङ्के त नि.शङ्कं न्यक्षिपत् मुनिरप्येवमुवाच—"हे कम्बुकण्ठि! महामूल्योऽसौ रत्नकम्बलं किमशुचिकर्दमे त्वयाऽक्षेपि?"। अथ कोशाऽप्युवाच—"हे मूढ! त्वं कम्बलं शोचसि किन्तु गुणरत्नमयमात्मान नरके पतन्त न शोचसि।" मुनिस्तच्छ्रुत्वा जातवैराग्य इत्यवोचत—"हे भद्रे! त्वयाऽहं साधु बोधितोऽस्मि; संसाराच्च साधु रक्षितोऽस्मि। हेऽनघे! अतीचारभवानि स्वानि पापानि नाशयितुं गुरुपादपार्श्वेऽहं यास्यामि, तव धर्मलाभोऽस्तु।" वेश्याऽपि साधुमेवमुवाच—"हे मुने! त्वयि मे दुष्कृत मिथ्या, यतो ब्रह्मनतस्थयाऽपि मया त्वं खेदितोऽसि, युष्माकं बोधार्थं मयेयमाशातना कृता। सा त्वया क्षन्तव्या। गुरुवचनमाश्रय, शीघ्र याहि। ततः स साधुरिच्छामीति वदन् सम्भूतविजयपार्श्वे गत्वाऽऽलोचना गृहीत्वा पुन. शीघ्रं तपश्चकार। परेद्युः समाधिमन्तः सम्भूतविजयाचार्यपादा मरण साधयित्वा स्वर्गं ययुः।

अन्यदा तुष्टेन राज्ञा कोशाऽपि रथिने दत्ता। राजाधीनेति सा रागं विनाऽपि तं रथिनमाश्रयत्। सा वरवर्णिनी स्थूलभद्रं विहाय कोऽपि पुरुषो नास्तीति दिवानिश तस्य रथिनो निकटे वर्णयामास। रथी गृहोद्याने गत्वा पर्यङ्के समुपविश्य कोशामनो रञ्जयितुं वक्ष्यमाणं स्वविज्ञानं तामदर्शयत्, तथाहि—बाणेनाम्रलुम्बीं विव्याध। तमपि पुनर्बाणेन तमपि पुङ्खेऽन्येन बाणेन' इति हस्तपर्यन्तं बाण-

पङ्क्तिरभूत् । क्षुरप्रेण वृन्तं छित्वा करेण बाणश्रेणिमुखस्थिता लुम्बीमाकृष्य कोशायै ददौ । साऽपि सम्प्रति मम विज्ञानं पश्येत्युक्त्वा सर्षपराशिं विधाय तदुपरि ननर्त । तद्राशौ सूचीं क्षिप्त्वा तां सूचीं पुष्पपत्रैराच्छाद्य तदुपरि साऽनृत्यत् । सा वेश्या न सूच्या विद्धा, न च सर्षपराशिः क्षतोऽभूदिति चमत्कारस्तया दर्शितः । ततो रथी जगाद–" अनेन दुष्करेणाहं तवोपरि तुष्टोऽस्मि त्वं मां याचस्व, यन्ममाधीनं वस्त्वस्ति तदहं निश्चितं ते ददामि । " सोवाच–" मया किं दुष्करमकारि ? येन त्वं रञ्जितो जातः, इदमपि नाधिकम् अस्मादप्यधिकम् भ्यासेन किं दुष्करं भवति ? किं चाम्रलुम्बीच्छेदोऽयं न दुष्करं, नृत्तमपि न दुष्करम्, स्थूलभद्रो यदशिक्षित चकार तत्तु दुष्करं प्रतिभाति । तथाहि–यत्र मया सह द्वादशवर्षाणि भोगानभुक्त, तत्रैव चित्रशालायां सोऽखण्डितब्रह्मव्रतस्तस्थौ । स्थूलभद्रमुनिं विना योगिनां चित्तं नकुलसंचाराद्दुग्धमिव स्त्रीसंचाराद् दुष्यति । स्थूलभद्रोऽखण्डितव्रतश्चतुर्मासीं स्त्रीनिकटे यथा तस्थौ तथैकमपि दिनं कः स्थातुं शक्नोति ? लोहशरीरस्याप्यन्यस्य स्त्रीनिकटे षड्रस आहारश्चित्रशालावास एकमपि व्रतभङ्गाय पर्याप्तम् । वह्नेरिव स्त्रिया पार्श्वे धातुमया विलीयन्ते, स स्थूलभद्रमहामुनिर्वज्रमयोऽस्तीति मन्ये । महासत्त्वं कृतदुष्करदुष्करं स्थूलभद्रमुनिं व्यावर्ण्य तदन्यं वर्णयितुं मुखमुद्रैव समुचिता ।

अथ रथिकः पप्रच्छ–" हे प्रिये ! त्वया यो वर्ण्यते स कोऽयं स्थूलभद्रनामा महासत्त्वशिरोमणिरस्ति ? । साऽप्यूचे–आर्यपुत्र ! तवाग्रे यमहं वर्णयामि स नन्दनृपमन्त्रिशकटालपुत्रः स्थूलभद्राख्यो मुनिरस्ति । " एतच्छ्रुत्वा सम्भ्रान्तः कृताञ्जलिरित्युवाच–" तस्य स्थूलभद्रमहामुनेरहमधुना किङ्करोऽस्मि । अथ सा कोशा विरक्तं ज्ञात्वा धर्मदेशनां चकार । स सन्मतिर्मोहनिद्रां त्यक्त्वा प्रत्यबुध्यत । सा तं प्रतिबुद्धं बुद्ध्वा स्वाभिमतमकथयत् । स तच्छ्रुत्वा विस्मयोत्फुल्लनयन इदमुवाच–" हे भद्रे । स्थूलभद्रगुणवर्णनेन त्वयाऽहं प्रति

बोधितो भवत्यैव दर्शित तस्य मार्गमथ गमिष्यामि । हे भद्रे ! तस्य कल्याणमस्तु, त्वं स्वमभिग्रह पालय " स एवमुक्त्वा सद्गुरो· पार्श्वे गत्वा दीक्षा जग्राह । भगवान् स्थूलभद्रोऽपि तीक्ष्ण व्रतमपालयत् । तदा द्वादशवर्षप्रमाणो दुष्काल. समभूत् ।

## चाणक्यचन्द्रगुप्तयोर्वृत्तान्तः

इतश्च गोल्लदेशे चणकनामनि ग्रामे चणीनाम ब्राह्मणो बभूव । तद्भार्या च चणेश्वरी । चणी जन्मप्रभृति कुशलश्रावकोऽभूत् । तद्गृहे ज्ञानिनो जैनमुनयो न्यवात्सु· ।

अन्यदा चणेश्वर्या उद्गतदन्त· पुत्रोऽजनि । त पुत्र चणी तेभ्यो मुनिभ्यो नमोऽकारयत् । चणी तं जातदन्तं जातं सुतं मुनिभ्योऽकथयत् । ज्ञानिमुनयोऽप्येष बालको राजा भावीत्युवाच । चणी मत्पुत्रो राज्यारम्भेण नरकभाड् मा भूदिति तस्य पीडामगणयन् दन्तानघर्षयत्, स तदपि मुनिभ्योऽकथयत् । मुनयोऽप्येवं बभाषिरे—" एष दन्तघर्षणाद् राजानं स्वाज्ञावशंवद करिष्यति । चणी तस्य ' चाणक्य इति नाम चकार । चाणक्योऽपि सर्वविद्यापारङ्गतः श्रावको बभूव । स श्रमणोपासकत्वेन सदा सन्तोषधन एकस्य कुलीनस्य ब्राह्मणस्य कन्या पर्यणैषीत् ।

अन्येद्युश्चाणक्यस्य पत्नी मातृगृह ययौ । तत्र तदा तद्भ्रातुर्विवाहोत्सवोऽभूत् । तस्मिन्महोत्सवे तस्या अन्या भगिन्य आययुः । ता वस्त्रालङ्कारवत्यो महाधनिकस्वामिका आसन् । ताः सर्वा अद्भुतवाहनाः दासीभिः समन्विता. शोभनच्छत्राडम्बरा माल्यभूषित-मौलिका आगता आसन् । ताः सर्वा दिव्याङ्गरागिण्यस्ताम्बूलकराः श्रियो देव्या वैक्रिया मूर्तय इवाऽऽसन् । चाणक्यस्त्री तु दिने रात्रौ चैकस्थूलवस्त्रा विशुद्धशुद्धकाष्ठहाराऽलङ्कारा जीर्णकञ्चुका जीर्णकौसुम्भोत्तरीया ताम्बूलरहितमुखी वपुर्मलैकसंजाताङ्गरागा त्रपुकुण्डला

कर्मणा कर्कशकरी सदा मलिनकेशी ताभिर्धनिकपरिणीताभिर्भगिनीभिरुपाहस्यत । विवाहोत्सवं द्रष्टुमागतः सर्वोऽपि जनस्तामुपजहास । सा तु लज्जमाना कोणप्रविष्टा विवाहोत्सवमपि न ददर्श ।

अथ सा विषण्णवदना साञ्जनैरश्रुभिर्भूमिं तिलकयन्ती चाणक्यगृहे गता । चाणक्योऽपि तां प्रातः कैरविणीमिव म्लानमुखीं दृष्ट्वा तद्दुःखदुःखी मधुराक्षरमुवाच—"हे प्रिये ! तव किं मत्कृतोऽपराधोऽथवा प्रतिवेशिमकृतोऽपराधो यद्वा पितृगृहकृतोऽपराधो यदेवं विषीदसि ?" यद्यपि साऽपमानदुःखिता कथयितुमसमर्थाऽऽसीत्, तथापि पत्याग्रहवशात् तदुवाच, विज्ञातस्त्रीदुःखहेतुश्चाणक्योऽपि द्रव्यमुपार्जयितुं निरपायमुपायं व्यचिन्तयत् । पाटलीपुत्रनगरे नन्दराजो ब्राह्मणाना विशिष्टां दक्षिणां ददाति, ततोऽहं तत्र तदर्थं यामि " इति निश्चित्य स तत्रागमत् । तत्र राजसभान्यस्ते दत्तेष्वासनेषु प्रथमासने स उपाविशत् । चाणक्येन तदासनमाक्रान्तं यस्मिन्नासने राजैव प्रत्यहं सदोपविष्टआसीत् । यतस्तद् भद्रासनमासीत् । तदा नन्दनृपेण सहाऽऽगतो नन्दराजपुत्र उवाच—एष ब्राह्मणो राज्ञः प्रभावमाक्रम्योपविवेश । " ततो राज्ञः एकया दास्या सामपूर्वकमूचे—' हे द्विज ! अस्मिन् द्वितीयासने त्वमुपविश । " स " मम कमण्डलुरत्र स्थास्यति " इत्युक्त्वा तत्र कमण्डलुं न्यधात् । एवं दण्डेन तृतीयं, जपमालया चतुर्थम्, उपवीतेन पञ्चमं चासनमुत्थाप्यमानः स रुरोध । ततो दास्युवाच—अयं विशेषो धृष्टः आद्यमासनं न मुञ्चति, अन्यान्यासनानि स रुणद्धि, तत्किमेतेन धृष्टेन वातुलेन ब्राह्मणेन ? ' इति सा चाणक्यं पादेनाऽऽहत्योत्थापयामास । चाणक्यस्तत्क्षणाद्दण्डस्पृष्ट उरग इव रुष्टः पश्यतः सर्वलोकस्य समक्षमिमां प्रतिज्ञां चकार—" अहं सकोशभृत्यं ससुहृत्पुत्रं सबलवाहनं नन्दं महावायुस्तरुमिवोन्मूलयिष्यामि । आध्माततास्रताम्रमुखः क्रुधाग्निरिव ज्वलंश्चाणक्यः सत्वरमेव शीघ्रं नगराद्बहिः ससार । धीमच्छिरोमणिश्चाणक्य एवं चिन्तयामास यत् बिम्बान्तरितो राजाऽहं भविष्यामि, ' राज्ययोग्यं कञ्चिन्नरं

पश्यामि ' इत्यभिमानात् स भूमौ बभ्राम । यतोऽभिमानिनोऽपमानं न विस्मरन्ति ।

अन्यदा चणेश्वरीकुक्षिजन्मा स ब्राह्मणो नन्दराजस्य मयूरपोषका यत्र न्यवात्सुस्तत्र ययौ । चाणक्यः परिव्राजकवेषधारी संस्तस्मिन् मयूरपोषकग्रामे भिक्षार्थं प्राविशत् । तदा मयूरपोषकवरस्याऽऽपन्नसत्त्वायाः कन्यायाश्चन्द्रपानाय दोहदोऽभूत्, तत्कुटुम्बेन स दोहदश्चाणक्याय कथितः, कथमसौ पूरणीय इति पृष्टश्चाणक्य उवाच–" यद्येतस्या जातमात्रं बालकं मम दत्थ, तदाऽहमस्याश्चन्द्रपानदोहदं पूरयाम्येव ", अस्या अपूर्णे दोहदे गर्भनाशो मा भूदिति तन्मातापितरौ चाणक्यवचनं स्वीचक्रतुः ।

अथ चाणक्यः सच्छिद्रं तृणमण्डपं व्यरचयत् । तदूर्ध्वे पिधानधारिणं नरं गुप्तममुचत् । तस्याधः पयसा भृत स्थालं रचयामास । कार्तिकपूर्णिमामध्यरात्रौ तत्र चन्द्रः प्रत्यबिम्बत । तत्र सङ्क्रान्तं तं पूर्णचन्द्र गुर्विण्या अदर्शयत् । पिबेत्युक्ता सा विस्मेरमुखी तं पातुमारेभे । सा यथा यथाऽपिबत् तथा तथा गुप्तपुरुषस्तृणमण्डपगतं तच्छिद्रं पिधानेनप्यधात् । एव दोहदे पूरिते समये सा पुत्रमजीजनत् । पितरौ तस्य नाम ' चन्द्रगुप्त ' इति चक्रतु. मयूरपोषककुलकैरविणीचन्द्रः स चन्द्रगुप्तो दिने दिने चन्द्र इव व्यवर्धत, चाणक्योऽपि सुवर्णोपार्जनबुद्धया परिभ्रमन् धातुवादविशारदानन्वेषयितुं प्रारेभे ।

इतश्च चन्द्रगुप्तो बालकै. सह प्रत्यह क्रीडंस्तेभ्यो ग्रामादिक भूप इव सदा प्राप । बालकान् हस्तीकृत्याश्वीकृत्य चारुरोह । प्रायो भाविनी लक्ष्मीरिङ्गितैरपि सूच्यते । क्रमेण चाणक्यः परिभ्रमंस्तत्रैवागात् । चन्द्रगुप्त तादृशचेष्ट दृष्ट्वा विस्मितोऽभूत् । चाणक्यस्त परीक्षितुमेवमुवाच–" हे राजन् ! त्वया मह्यमपि किंचन दीयताम् " । चन्द्रगुप्तोऽप्युवाच–" हे ब्राह्मण ! त्वं इमा ग्रामगवीर्यथारुचि गृहाण, मद्दत्ता. को निषेत्स्यति ? " चाणक्य. स्मित्वोवाच–" इमा गा कथं गृह्णामि ? अह गोस्वामिभ्य. पर बिभेमि; यतस्ते मा

मारयिष्यन्ति । " चन्द्रगुप्तोऽप्युवाच–" त्वं मा भैषीः, तुभ्यं मया गाव प्रदत्ता गृह्यन्ताम्, यत पृथिवी वीरभोग्याऽस्ति । " विज्ञान वानपि चाणक्योऽचिन्तयत्–" अहो असौ विज्ञानवानस्ति । अतस्तत्समीपस्थान् बालकान् पप्रच्छ–" असौ बालक कोऽस्ति ? ", ते बाला ऊचु–" परिव्राजकपुत्रोऽसौ, मात्रा निजोदरस्थ एव परिव्राजकाधीनीकृत । " चाणक्योऽपि स्वयं लब्धं तं ज्ञात्वा बालक-मुवाच–" मदीयस्त्वं स एषोऽहमस्मि, त्वमागच्छ, तुभ्यं राज्यं ददामि, " चन्द्रगुप्तोऽपि राज्यलाभाय तदङ्गुलौ ललाग । चाणक्योऽपि तमादाय चौर इव शीघ्रं पलायाञ्चक्रे ।

ततश्चाणक्यो धातुवादोपार्जितेन द्रव्येण नन्दमुन्मूलयितु पत्त्यादिसामग्रीं संकलय्य पत्त्यादिसर्वबलेन पाटलीपुत्रनगरं चतुर्दिशम वेष्टयत् । ततो निर्गत्य नन्दराजस्तदाश्रसारं सर्वं चाणक्यशिबिरमजमारणलीलया कुट्टयामास । ततः समयविदौ चाणक्य–चन्द्रगुप्तौ पलयाञ्चक्राते । यतो नष्टाऽपि प्राणान् रक्षेत्, आत्मनि सति लक्ष्म्य पुनरागच्छन्ति ' इति नीतिरस्ति । नन्दोऽपि चन्द्रगुप्तं ग्रहीतु वरसादिन आदिशत् । ' यतो राजानो राज्यकाङ्क्षिण न सहन्ते । जितशत्रौ नन्दे पुनर्नगरं प्राप्ते सति नागरा स्वस्वसम्पदनुरूपमुत्सवं चक्रु । तेषां सादिनामेक सादी चपलेनाश्वेनातिनिकटे देशे गच्छतश्चन्द्रगुप्तस्य प्राप्त । प्रत्युत्पन्नबुद्धिश्चाणक्योऽपि तं सादिनं दूराद् दृष्ट्वा चन्द्रगुप्तायैवमादिशत्,–" पद्मिनीषण्डमण्डितस्यास्य सरसो जले क्रीडायामिव मज्जो मज्जेश्च मद्वचनेन ।

अथ धीरश्चन्द्रगुप्तोऽपि साधितजलस्तम्भनविद्य इवागाधेऽपि जले ममज्ज । चाणक्य स्वयं तु सरस्तटे सुस्थिरासनो निर्ममो योगीव समाधिनाटनं कृत्वाऽस्थात् । अथ पुच्छ्याघोषकोणाघातसदृशपादपातशालिना वायुवेगेनाश्वेन स नन्दसादी समागमत् । स चाणक्यं पप्रच्छ–" हे भदन्त ! त्वयात्र किं कोऽपि नूतनतरयौवन पुरुषो दृष्ट ? । चाणक्य समाधिभङ्गभीरुत्वाभिनयेनाङ्गुलिचेष्टया दु

कुर्वंस्तस्य जलमदर्शयत् । स सादी चन्द्रगुप्तं जलादाक्रष्टुं शीघ्रं जले मङ्क्तुं नर्तकी चलनीमिव परिहितवस्त्रादिकं मोक्तुमारेभे । अथ चाणक्य-स्तस्यैव खड्गं गृहीत्वा निर्दयो जलदेव्या बलीकर्तुमिव तन्मस्तकं चिच्छेद । "आगच्छ वत्स ! आगच्छ वत्स !" इति चाणक्येनोक्ते क्षणाच्चन्द्रगुप्तश्चन्द्रसागराद् इव सरोवरान्निर्ययौ । चाणक्यश्चन्द्रगुप्तं तस्मिन्नश्वे समारोप्योवाच–"यदाऽहं मादिने त्वामाख्यं तदा त्वया किं चिन्तितम् ?" । चन्द्रगुप्त उवाच–"हे आर्य ! तदा मयैतच्चिन्तितम्–"इदमेव श्रेय आर्यो जानाति न त्वहम्" चाणक्योऽचिन्तयत्–"अवश्यमयं सर्वदाऽधीनोऽस्ति, अयं यन्तुर्मे भद्रगज इव व्यभिचारी न भवति । गच्छतोस्तयोः पृष्ठे यमदूत इवोद्भटोऽन्यो नन्दसादी वायुवेगेनाश्वेन पुनरायययौ । चाणक्येन तमायान्तं दृष्ट्वा पुनरक्तश्चन्द्रगुप्तः सरोमध्ये हंस इव निममज्ज । चाणक्यो जलतटस्थं रजकमुवाच–"राजा रजकेभ्यो रुषितः, यदि त्वं न मुमूर्षसि तदा नश्य ।" रजकोऽपि तमश्ववारमुदायुधं दूराद् दृष्ट्वा सत्यमेवेति निश्चित्य जीवित-प्रियत्वात् पलायिष्ट । वस्त्रक्षालनेऽपि कृतश्रमश्चाणक्यस्तद्वस्त्राणि स्वयं बृहतीक्षालनैः शोधयितुमारेभे । तमायान्तं पूर्ववत् पृच्छन्तं सादिनं कुशाग्रबुद्धिश्चाणक्यस्तथैव जघान ।

चाणक्य–चन्द्रगुप्तौ तस्मात्स्थानादपजग्मतुः । गच्छंश्चन्द्रगुप्तो बुभुक्षया क्षामकुक्षिश्चिखिदे । चाणक्यश्चन्द्रगुप्तं ग्रामाद् बहिर्मुक्त्वा ग्रामाभिमुखं भक्तमानेतुं चचाल । यतो ग्रामं विना भक्तं न लभ्यते । स चाणक्यो ग्रामान्निर्गच्छन्तं तत्कालकृतभोजनं मन्दमन्दपदं तुन्दपरिमार्जं भट्टमपश्यत् । तं स पप्रच्छ तत्र ब्राह्मणस्य पालिर्लगति न वा ? । भट्टोऽप्युवाच–"लभत्येव यतो मम सम्प्रति लग्ना ।" पुनश्चाणक्यस्तं पप्रच्छ–"हे भट्ट ! त्वया किं भुक्तम् ?" स उवाच–"सरसदध्ना कृतशालिकरम्बकं भुक्तम् ।" चाणक्योऽचिन्त-यत्–ग्रामे भक्तार्थं भ्रमतो मम विलम्बः स्यात्, तत्कथं मां विना चन्द्रगुप्तो भविष्यति ? । एकाकी चन्द्रगुप्तो दुर्वारविक्रमैर्नन्द-

सादिभि श्वभि सूकर इव गृह्यते । यदि चन्द्रगुप्तकुमारो नन्दसादिभिर्गृह्येत मम तदा मनोरथ स्वप्नराज्यतुल्यो भवेत् । तस्मादस्य भट्टस्योदरात् करम्बकमाकृष्य चन्द्रगुप्ताय ददामि । तस्य प्राणा यथा तथा रक्षणीया सन्ति । ” इति विचिन्त्य चाणक्यस्तस्य भट्टस्योदरं विदारयामास । चाणक्योऽपि पात्रादिव भट्टोदरात् करम्ब सद्य स्वयमाकृष्य चन्द्रगुप्तमभोजयत् । ततो क्रमश्चाणक्य सायकाले खगो नीडमिवैक ग्राम प्राप । तदा भिक्षार्थे तत्र ग्रामे प्रविष्ट स परिभ्रमन् कस्याश्चिद्दीनाया वृद्धायाः गृहे ययौ । तदा बालकानामुष्णा रब्बा परिवेषिताऽभूत् तत्रैको बालकोऽतिबुभुक्षित करं मध्ये चिक्षेप । तत स्थविरा दग्धाङ्गुलिक रुदन्त बालमुवाच–“ हे बालक ! चाणक्य इव त्व किञ्चिदपि न जानासि ” । चाणक्यस्तद्वच श्रुत्वा तद्गृहे प्रविश्य वृद्धा पप्रच्छ– अस्मिन् बालके कोऽय चाणक्य दृष्टान्तस्त्वया दत्त ’ । ” स्थविरोवाच– ‘ आदौ बहिर्देशमसाधयश्चाणक्योऽल्पमतिर्नन्दपुरं रुन्धन् वैफल्य प्राप, तथाऽय बाल शनैः पार्श्वेष्वभुञ्जानो मध्य एव हस्त क्षिपन्नुष्णरब्बयाऽङ्गुलिषु दग्धोऽभूत् ।

ततश्चाणक्य –“ अहो अस्या स्त्रिया अपि बुद्धिमत्ता ” इति चिन्तयन् हिमवत्कूट नाम नगरं ययौ । तत्र चाणक्य पर्वताख्येन राज्ञा सह तत्सहायताकाम्यया मैत्रीं चकार । अन्यदोवाच च–‘ हे पर्वतराज ! नन्दराजमुन्मूल्य तद्राज्य संविभज्यावां भ्रातराविव गृह्णीव । तत पर्वतराजस्तद्वचन स्वीचकार । चाणक्ययुत स हि केसरीव सन्नद्धोऽभूत् । अथ चाणक्य–चन्द्रगुप्त–पर्वता नन्ददेश साधयितु बहिरुपचक्रमिरे । वैरेक नगरं रुद्धमपि भङ्क्तु नाशकि । चाणक्यो भिक्षुवेषेण भिक्षार्थं तत्र प्राविशत् । तत्र त्रिदण्डी चाणक्य पुरमध्ये परिभ्रमन्नादिका सकला सप्त मातृदेवता अपश्यत् । ततश्चाणक्योऽचिन्तयत्–“ इमा सकला देवता इद नगरं नून रक्षन्ति । अत एतत्पुरं न भज्यते । इमा मातर कथमुत्थापनीया इति चाणक्यो यावच्चिन्तयामास तावत्पुररोधनपीडितैर्नागरिकैरपृच्छ्यत–“ हे भगवन् !

एतन्नगर कदा रोधरहित भविष्यति ? इति ब्रूहि, प्रायो भवादृशा सर्वं खलु जानन्ति । चाणक्य उवाच–" यावदिमा मातर इह सन्ति तावदस्य पुरस्य रोधमुक्ति कुतः स्यात् ? " तत पौरा मातृमण्डलं शीघ्रमुत्पाटयामासुः । आर्तस्तथा विशेषतो धूर्तवश्यश्च किं न कुरुते ? । तदा चाणक्यदत्तसङ्केतौ चन्द्रगुप्त–पर्वतौ पलायिषाताम् । ते नागराश्चात्यन्तं जहृषु । सागरवेलेव दुर्धरौ तौ पुन· परावृत्त्याऽचिन्तितौ तत्र पुरे प्रविविशतु । ततश्चाणक्यसहायौ महारथौ तौ द्वावपि तत्पुरं भङ्क्त्वा नन्दनृपदेश साधयामासतुः । चाणक्यबुद्ध्या महापराक्रमौ तौ सेनाभिः पाटलीपुत्रनगर परितोऽरुधताम् । नन्दराज पुण्यक्षयेण क्षीणकोश क्षीणबल. क्षीणबुद्धि क्षीणपराक्रमोऽभूत् । यतो यावत् पुण्य तिष्ठति तावदेवर्द्धयः सन्ति । अनन्तरञ्चाणक्यसमीपे नासिकागतप्राणो नन्दो जीवितं याचितवान् । कस्य जीवन न प्रेयः । पुनश्चाणक्योऽज्ञापयत्, त्वम् एकेन रथेन निर्याहि, तत्र च स्वेष्ट वस्तु सस्थापयेः । यत एकेन रथेन गच्छतस्ते कोऽपि नोपद्रोता, न च ब्राह्मण इव हन्यसे, अतः समाश्वसिहि, मा भैषी· । तदा नन्दराड् द्वेभार्ये, कन्यामेका यथाशक्ति वसूनि च रथमारोप्य नगरान्निरगमत् । तदा रथस्था नन्ददुहिता आयान्तं चन्द्रगुप्तं दृष्ट्वा शीघ्रोत्पन्नानुरागा देवीव निर्निमेषनेत्राभवत् । नन्दनन्दिनी हावभावैश्चन्द्रगुप्तस्य सम्भोगस्वीकृतिश्च प्रादादिव । नन्दः ता प्राह, हे वत्से ! स्वैरं स्वयवरा भव । कन्याना स्वयवरः प्रशस्यते ! हे आयुष्यमति ! तुभ्यं स्वस्ति, रथादुत्तर, माम्मुञ्च, तव परिणयनशल्य त्वया सह यातु, एवमादिष्टा सा शीघ्रं रथादुत्तीर्य यावच्चन्द्रगुप्तस्य रथवरमारोढुं प्रक्रान्तवती तावत् चन्द्रगुप्तरथस्य नवारका यन्त्रक्षिप्तेक्षुवदभज्यन्त । असावमङ्गलकरी केयं मद्रथमायाति ? इति रथमारुरुक्षु ता चन्द्रगुप्तो निवारयामास । चाणक्योऽप्युवाच–" हे चन्द्रगुप्त ! इमा मा निवारय, इदं शकुन शुभाय, अन्यथा त्वं मा मंस्था । हे वत्स ! अनेन शकुनेन तव वंशो नव पुरुषयुगानि यावदधिकाधिका वृद्धिमेव गमिष्यति । "

ततश्च नन्दगृहे चन्द्रगुप्त–पर्वतौ प्रविष्टौ विपुला नन्दसम्पत्तिं संविभक्तुमारेभाते। तत्रैका कन्या सर्वस्वमिव रक्षिताऽभूत्। नन्दभूपस्तां विषेणोपाजीवत्। पर्वतकस्य तस्यामनुरागस्तथा बभूव यथा तां हृदये ध्यातव्यदेवतावदस्थापयत्। चाणक्यस्तां पर्वतायैव ददौ। तदैव च विवाहमङ्गलमारेभे। तदा होमाग्नितापोत्पन्नतत्स्वेदजलसङ्गमात् पर्वतकेऽपि तस्या विष संचक्राम। तदा पर्वतक संक्रान्तविषवेगार्त शिथिलीभूतसर्वाङ्ग संश्चन्द्रगुप्तमुवाच–अह पीतविष इव वक्तुमपि नोत्सहे, हे वत्स! मां परित्रायस्व, अह म्रिये नात्र संशय।" मान्त्रिका मान्त्रिका वैद्या वैद्या इत्यनुभाषिण चन्द्रगुप्त चाणक्य कर्णे भूत्वैवमन्वशात्–" औषध विनैव ते व्याधिर्याति तर्हि यातु, मौन कुरु, इममुपेक्षस्व, अमु विना ते कल्याण भवतात्! अर्धराज्यहर मित्र यो न हन्यात् स हन्यते, इति हेतोरय मारणीय, यदि स्वयमय म्रियते तर्हि त्व पुण्यवानसि"। बुद्धिमदग्रेसरश्चाणक्य उत्क्षिप्तभृकुटीभङ्गश्चेष्टयैवमनुशिष्य चन्द्रगुप्त वारयामास। ततश्च पर्वतक पञ्चत्व प्राप। तदा समस्त तद्राज्य चन्द्रगुप्तस्यैवाभवत्। एव च श्रीमहावीरनिर्वाणात् पञ्चपञ्चाशदधिके वर्षशते व्यतीते चन्द्रगुप्तो राजाऽभूत्।

एकदा केऽपि नन्दानुजीविनो गुप्ते प्रदेशे स्थिताः पुरुषाश्चन्द्रगुप्तराज्ये चौर्यं चक्रु। अथ चाणक्य कञ्चित् पुररक्षाक्षम पुरुष पश्यन्नेकस्य कौलिकस्य गृहमगच्छत्। तदा स मत्कोटकदरीषु वह्निं क्षिपन्नासीत्। चाणक्यस्त पप्रच्छ–किं करोषि? तदा स उवाच–मत्पुत्रोपद्रवकरान् दुष्टानिमान् मूलादुन्मूलयामि। दुष्टानामन्वयक्षय उचितम्। अहो एतस्य साम्यामय कौलिक प्रकृष्टोऽस्ति" इति चिन्तय श्चाणक्यश्चन्द्रगुप्तमुपययौ। शिक्षाविचक्षणश्चाणक्य कौलिकमाहूय चन्द्रगुप्तान्नगराध्यक्ष कारयामास। ते चौरा नन्दपुरुषास्तेन विविधै र्भोजनादिभिर्विश्वास्याहन्यन्त चाणक्यस्य बुद्धिर्वृथा न भवति स्म।

इतश्च चाणक्यो यस्मिन् ग्रामे पुरा भिक्षां न प्राप तद्वासिन कुटुम्बिन आह्वयत्। तदा तेषां क्षुद्रबुद्ध्योत्पन्नकोपश्चाणक्य–" ग्रामाणां

वंशाना वृर्ति कुरुत " इत्यादिदेश । ततश्चाणक्यनिर्देशेन तैस्तद्ग्रामकुटुम्बिभिराम्राणा तरूणा वंशीश्छित्त्वा वृतिश्चक्रे । ततश्चाणक्यो– " रे रे मूर्खाः ! मया वंशीनामाम्रैर्वृति क्रियतामित्यादेशि " इति वदन्चुक्रोध । कृत्रिममिमं दोषमुत्पाद्य तेषा कुटुम्बिना सबालवृद्धं ग्राम रुषाऽज्वालयच्च ।

अन्येद्युश्चन्द्रगुप्तस्य कोशो नास्तीति चिन्तया चाणक्यो दीनारैः स्थालमापूर्य लोकं प्रत्युवाच–" अहो जना ! मया सहाक्षैर्दी-व्यन्तु " यो मा जेष्यति स दीनारपूरितमिद स्थाल पणं लभते; यद्यहं यं जेष्यामि तत्पार्श्वादेक दीनारं ग्रहीष्यामि, इयं मे वाक् शिला-रेखावन्निश्चलाऽस्ति । " ततश्चाणक्यो जनैः सह दिवानिश रन्तुं प्रारेभे, कूटपाशकैस्ताञ्जिगाय च । तथैष धनोपार्जनोपायः सविलम्बः स्वल्पोऽपीत्यन्यमुपायं कर्तुं सर्वान् पौरानाह्वयत् । ततस्तान् भोजयित्वा वरवारुणीमपाययत् । पानगोष्ठ्यामतिबहुलानुच्चतालानवादयच्च । तथा धनोपार्जनदक्ष. स हसननर्तनगानादिप्रमत्तचेष्टितमभिनयन्नुवाच–" मम धातुरक्ते द्वे वस्त्रे, त्रिदण्ड स्वर्णकुण्डिका, वशवर्ती राजा च वर्तते, तस्माद् यूय झुम्बरीं वादयत । " ततश्च कौलिकैर्झुम्बरीवाद्ये वादिते सति परो मत्तो नागरो हस्तमुत्थाप्योवाच–" योजन-सहस्रयाने हस्तिनो यानि पदानि तानि प्रत्येक सुवर्णसहस्रेणाहं पूज[ र ]यामि । " प्राग्वद् वादिताया झुम्बर्यामन्यो नागरिक उवाच– " तिलानामाढक उप्त उत्पन्ने भृश फलिते यावन्तस्तिला भवन्ति, तावन्ति मम गृहे स्वर्णसहस्राणि सन्ति, तेषा सख्या नास्ति । पूर्ववद् वादिताया झुम्बर्यामन्य उवाच–" अहं बहुतरेण जलपूरेण प्रवहन्त्या गिरि नद्या पयोवेगमेकदिनोत्पन्नेन गोनवनीतेन पालिं कृत्वा निरुणध्मि। पूर्ववद्वादितझुम्बर्यामन्योऽवदत्–" अहं जात्यनवाश्वबालानामेकदिनोत्पन्नाना समुत्पाटितैः स्कन्धकेशैः पाटलीपुत्रनगर समन्तत. तरुं तन्तु-भिल्लतेव वेष्टयामि । " प्राग्वद्वादितझुम्बर्यामन्य उवाच–" मम गृह एक शालिर्भिन्नभिन्नशालिबीजोत्पादकः, अन्यो गर्दभिकाशालि

स पुनर्लून लून पुन पुन फलतीत्येतद्रत्नद्वय मम वर्तते। प्राग्वद्वादितदुन्दुभिर्यामन्यो मदमत्त आह स्म—"मम गृहे सहस्रसंख्यक द्रव्यमस्ति, अहमनृणोऽस्मि, सुगन्धिश्चास्मि श्रेष्ठचन्दनलिप्ताङ्गः, मम स्त्री सदाऽधीनाऽस्ति, मम तुल्य सुखी कोऽपि नास्ति, प्राग्वद्वादितदुन्दुभिर्या मतिविज्ञानमहासमुद्रश्चाणक्य एव सर्वेषा धनिना धनमज्ञासीत्। एकयोजनगामिहस्तिपदप्रमितिसुवर्णं तथैकतिलोत्पन्नतिल-प्रमिता स्वर्णसहस्रका, प्रतिमासं चैकदिननवनीतभव घृतम् एकस्मिन् दिने जाता जात्यकिशोरा, कोष्ठागाराणा भरणप्रमाणा शाल्योऽपि ते पौरैश्चाणक्याय ददिरे। यतश्चाणक्यस्तेषा मर्मज्ञोऽभूत्। चाणक्यस्तेन धनेन चन्द्रगुप्त समर्थ चकार यतो राज्ञा धीनिधि सचिव कामधेनुर्भवति।

इतश्च तस्मिन् कराले द्वादशाब्दके दुष्काले चन्द्रगुप्तपुरे सुस्थितनामाऽऽचार्योऽवसत्। अन्नदौर्लभ्येनानिर्वाहात् स्वगण सोऽन्यत्र देशे प्राहिणोत्, स तु स्वय तत्रैव तस्थौ। द्वौ क्षुल्लकौ [मुनी] पुन परावृत्य तत्रैवाऽऽजग्मतु। आचार्ये किमागताविति पृष्टौ तावूचतु—"गुरुपादाना वियोग सोढुमावा न शक्नुव। तस्माद्ध पार्श्वे नौ मरणजीवने शुभे।" आचार्य उवाच—"अत्र युवाभ्या साधु न कृतम्, यतो मुग्धत्वाद् युवामगाधक्लेशसमुद्रे पतिष्यथ।" इत्युक्त्वा गुरुणाऽनुज्ञातौ तौ भक्त्या गुरु शुश्रूषमाणौ तच्चरणकमलमिलिन्दौ तत्रैवास्थाताम्। ततो दुर्भिक्षप्रभावादल्पलब्धया भिक्षया गुरून् सारयित्वा तौ स्वय भुञ्जानावत्यसीदताम्। अपूर्णमाणाहारौ बुभुक्षया क्षीयमाणौ तौ मुनी रहसि परस्परं मन्त्रयामासतु—"गुरुणा गीतार्थमुनीन् प्रति प्रकाश्यमानमदृश्यत्वकारक दिव्यमञ्जनमश्रौष्व। तस्मादय प्रयोग आवाभ्या कुक्षिभरणाय प्रयोक्तव्य। पुन पूर्णकुक्षी निश्चिन्तौ गुरुपादानुपास्वहे।" तौ द्वौ मिलित्वा अदृश्यीभूय तस्मिन्नेव दिने भोजनावसरे चन्द्रगुप्तस्य निकट जग्मतुः। अदृश्यमानौ तौ मुनी चन्द्रगुप्तपात्रे प्राणप्रियौ बन्धू इव बुभु

जाते । एवं प्रतिदिनं भुञ्जानाभ्यां ताभ्यां राजोनोदरत्वेन जितेन्द्रियस्तपस्वीवोदस्थात् । शनैः शनैस्ताभ्यां हृतभोजनश्चन्द्रगुप्त· कृष्णपक्ष-चन्द्र इव क्षीणो बभूव । तथापि स निजामतृप्तिं कमपि नावोचत् । मदवान् हस्तीव नित्यं क्षुत्पीडितोऽप्यस्थात् । एकदा सुधीश्चाणक्य एकान्ते तमपृच्छत्–" हे वत्स ! क्षयरोगेणेव किं प्रत्यह क्षीयमाणस्त्वमसि ?। चन्द्रगुप्त उवाच–" मम न्यून न परिवेष्यते, किन्तु कोऽपि प्रेत इव मम भोजनमाच्छिनत्ति । मा पूर्णाहारभोजनं तटस्थिता आर्या जानन्ति । अहमर्द्धमपि न भुञ्जे । अतः किञ्चिदप्यहं न जाने । चाणक्य उवाच—" अद्यापि त्व किमेव मुग्धधीरसि ?। यदतत्त्वज्ञेन मुमुक्षुणेवाऽऽत्मा चिर खेदित, भवत्विदानीमपि त्वं युक्तमाख्यातवान् । तव भोजनलुण्टाकमह शीघ्र ग्रहीष्यामि ।" इत्युक्त्वा चाणक्य प्रात·समये चन्द्रगुप्तभोजनस्थानभूतले कोमलादपि कोमलं लोष्टचूर्णं न्यक्षिपत् । भोक्तुमुपविष्टे चन्द्रगुप्तनृपे भोक्तुमागतयोस्तयोरदृश्यमानयोस्तत्र सचूर्णे भूतले पदचिह्नानि जातानि । चाणक्यो राशि भुक्तोत्थिते तत्र तयोश्चरणपङ्क्तिं दृष्ट्वा मनस्यचिन्तयत्–" कोऽपि मून्यस्तपाद सिद्धाञ्जनो नरोऽदृश्यीभूय स्थालाल्लीलया भोजनं प्रत्यहं हरति ।" इति चाणक्यो द्वितीयदिने भोजनालये भोजनसमये गाढं धूममकारयत् । पूर्ववच्चन्द्रगुप्तेन सहैकत्र स्थाले भुञ्जानयोस्तयो प्रसरता धूमसमूहेन नेत्राण्यबाष्पायन्त । ततस्तयोरदृश्यीकरण सर्वं नेत्राञ्जन बाष्पजलैरतिशीघ्र पङ्कवद्दूरी बभूव । ततस्तौ नेत्राञ्जनरहितौ तत्र भाजने भुञ्जानौ कोपाद्भृकुटिकारिणा नृपलोकेनादर्शिषाताम् । तयोर्न्यक्कारकृद्धच कोऽपि चाणक्यभिया नोवाच । परन्तु चाणक्य· प्रवचनोड्डाहभीरुरिदमुवाच—" युवामृषिरूपेण पितरौ परमेश्वरावस्मासु प्रसाद कृत्वा स्वस्थानाय गच्छतम् ।" तयोर्गतयो राजा सविषादमिदमुवाच—" अहमनयोरुच्छिष्टभोजनेन दूषितोऽस्मि ।" ततश्चाणक्य उवाच—" राजन् ! स धन्योऽस्ति यो विरक्ताय भिक्षा ददाति । त्वं त्वेकस्थालातिथीभूतमुनिकोऽसि तर्हि किमुच्यते ?" चन्द्रगुप्तमेव सबोध्याऽऽचार्यपार्श्वं गत्वा क्षुल्लान्यायं प्रदर्शयन्नु-

पालम्भ ददौ । आचार्य उवाच–“ अनयो क्षुल्लयो को दोष ? यद् भवादृशा सद्गुरुषा स्वकुक्षिम्भरय सन्ति । ” चाणक्योऽपि तमाचार्यं मिथ्यादुष्कृतपूर्वक वन्दित्वोवाच– त्वयाऽऽह प्रमादी साधु शिक्षितोऽस्मि अद्यारभ्य प्रत्यह यद्भक्तपानोपकरणादिक साधू पकारक तन्मम गृहे ग्रहीतव्यम् । ’ इत्यभिग्रहमादाय दृढनिश्चयश्चाणक्यस्तदादि निजगार्हस्थ्य सफलीकुर्वन् त पालयामास ।

अथ तस्य पितेव हित स चाणक्य पाषण्डिमतभावित मिथ्यादृष्टि चन्द्रगुप्तमनुशासितुमारेभे–“ यतोऽमी पापा असंयता स्त्रीषु लम्पटा संभाषितुमपि न योग्यास्तर्हि तत्पूजाया तु कथैव का ? । कषायपक्षिवृक्षेषु कृतभेषु दुरात्मस्वेतेषु दानम्–ऊषरेषु जलवृष्टिवद् व्यर्थं भवति । हे राजन् ! आत्मानमाश्रित च लोहनौकावद् भवसागरे पातयत्सु तेषु भक्ति न कुरु । ” चन्द्रगुप्त उवाच—“ इद त्वद्वचन मे गुरुसम्मितम् तथापि ते संयमिनो न सन्तीति मा प्रत्यायय । ततश्चाणक्यो नगर एव प्रघोषणामकारयत्–“ राजा सर्वेषा पाषण्डिना धर्मं श्रोष्यति । ” ततो विचक्षणः स सर्वांस्तानाहूय नृपान्त पुरसमीपतर एकान्ते देशे निवेशयामास । तदा चाणक्येनाग्रतोऽपि हि शुद्धान्ताऽऽसन्नदिग्भागेऽलक्ष्य सूक्ष्म लोष्टचूर्णमक्षेपि । तत्र चाणक्येनोपदेशनार्थं प्रवेशिता पाषण्डिनो विजन स्थान ज्ञात्वा राजान्त पुरा भिमुख ययु । तत स्वभावेन स्त्रीलोला असंयता राजाङ्गनासमूह गवाक्षविवरैर्द्रष्टुमारेभिरे । ते दुराशया राजस्त्रिय पश्य तस्तावत्तस्थु , यावद्राजा नाऽऽययौ । राज्ञि समागते तूपविविशु । ततस्ते चन्द्रगुप्ताय धर्ममुपदिश्य पुनरन्त पुरदिदृक्षयाऽऽगमनमिच्छन्तो जग्मु । तेषु गतेषु चाणक्यश्चन्द्रगुप्तमुवाच–“ हे वत्स ! त्वमिह पाषण्डिनां स्त्रीलम्पटतालक्षण पश्य । गवाक्षविवरक्षिप्तलोचनैरजितेन्द्रियैस्तैस्त्व दागमनपर्यन्त त्वदन्त पुरमदर्शि । त्व तेषां गवाक्षविवराधस्तात् स्पष्ट प्रतिबिम्बितामिमा पादपङ्क्ति दृष्ट्वा प्रतीहि । ” ततश्चाणक्यो राज्ञि संजातप्रत्यये सति द्वितीयदिने तत्र धर्ममुपदेष्टु जैनमुनीनप्याहूयत् । अथ ते साधव स्वाध्यायावश्यकेन नृपागमनमपालयन् । प्रथमस

आसनेष्वेवोपाविशन् । ततश्च ते साधवो धर्ममुपदिश्येर्यासमितितत्परत्वाद् भूमिमेव पश्यन्त उपाश्रयं ययुः । ततश्चाणक्यो गवाक्षविव-
राधोभागे त लोष्टचूर्णं यथास्थ दृष्ट्वा तच्चन्द्रगुप्तमदर्शयत् । उवाच च—"एते मुनय पाषण्डिवन्नात्राऽऽजग्मु , अन्यथा तदीयचरणप्रति-
बिम्बानि कुतो न दृश्यन्ते ? । अथ चन्द्रगुप्तराजः समुत्पन्नविश्वास साधून् गुरून् मेने । विषयेषु योगविदिव पाषण्डिषु विरक्तो बभूव ।

प्रसिद्धधीगुणश्चन्द्रगुप्तलक्ष्मीलतामण्डपश्चाणक्य एवं नानाप्रकारैश्चिन्तयामास । अहं शनै शनैश्चन्द्रगुप्त विषाहारं साधयामि, यथाऽ-
स्य रसायनं स्यात्, विषदश्च न प्रभवेत् । अथ महाबुद्ध्या बृहस्पतिरिव चाणक्यः प्रतिदिनमधिकाधिक विषाहारमभोजयत् । ततश्चान्ये-
द्युश्चन्द्रगुप्तेन सह तस्य गुर्विणी दुर्धरानाम्नी राज्ञी रागोत्कर्षेण भोक्तुमारेभे । चाणक्यो विषान्न भुञ्जाना ता दृष्ट्वा गर्भविनाशशङ्कया
त्वया किं कृतमिति शीघ्रमुवाच । राज्ञी विषभोजनमात्रेण पञ्चत्वं प्राप । ततश्चाणक्यो दध्यौ—"अस्या गर्भो न नश्यतु" इति तस्या
मृतायास्तदानीमुदरमदारयत् । तस्माद्गर्भच्छुक्तिपुटान्मुक्तामिव गर्भमाचकर्ष । तस्य बालस्य मूर्धनि विषबिन्दु सक्रान्तश्चाणक्येन
बिन्दुसार इत्यभिधायि । बिन्दुसारे तारुण्यं वय प्राप्ते सति चन्द्रगुप्त' समाधिना मरणं प्राप्य दिव जगाम । अथ मतिमांश्चाणक्य-
स्तद्राज्ये बिन्दुसारमस्थापयत् । सचिवाधीनसिद्धि· स चाणक्याऽऽज्ञाकरोऽभूत् ।

इतश्च चाणक्यः पूर्वं बिन्दुसारमाज्ञाप्य चतुर सुबन्धुनामान सचिव कारयामास । स चाणक्ये स्वतन्त्रतामन्त्रिताभिलाषी मत्सरी
चाणक्योच्छेदायैकान्ते बिन्दुसार प्रतीदमुवाच—"हे राजन् ! अह यद्यपि तव प्रमाणभूतो नास्मि तथापि तव परिणामहित कथयामि,
यतः कुलीनानामय क्रमोऽस्ति । विश्वासघातकस्यास्य चाणक्यस्य त्व विश्वास मा कार्षी । एष दुरात्मा तव मातुरुदरं खलु व्यदारयत् ।"
तदैव स बिन्दुसारो धात्रीराहूय तत् पप्रच्छ । ताभिरपि तथैव कथिते स चाणक्यायाकुप्यत् । चाणक्यो राजान कुपित दृष्ट्वा स्वयमचिन्त-

यद्—" कृतघ्नेन सुबन्धुना मयि राज्ञाऽन्यथाऽकारि । अथ मयैव प्राक् सचिवपदे न्यवेशि । तन्मम प्रत्युपकाराय, अस्य कुलोचित युक्तम् । तस्मादासन्नमृत्योर्मे राज्यचिन्तया किम् ? । तथाप्यह प्रतिचिकी` स्वबुद्धि प्रयोक्ष्ये । मद्बुद्धिपिशाचिकाग्रस्त सोऽपि राज्य मा भोजीत् ।" इति तस्यापकारेण समयोचित करिष्ये " ।

अथ स उग्रबुद्धि समुद्गके योगमन्त्राधैर्वरगन्धान् संयोज्य लिखिताक्षरभूर्जेन सह प्राक्षिपत् । स सुधी समुद्गक जतुना विलिप्य पेटायां निदधौ । तां पेटां तालशतेन ताल्यामास । ता च गृहसर्वस्वमिव गृहमध्ये संस्थाप्य दीनानाथपात्रेभ्यो धन ददौ । ततो नगरसमीप शुष्कगोमयराशिशिरसि समुपविश्य निर्जरोधत्तोऽनशन चकार । ततो बिन्दुसारो यथाविपाजमृतमातृसमाचार धात्रीमुखात् ज्ञात्वा पश्चात्ताप कुर्वाणस्तत्राऽऽजगाम । चाणक्य क्षमयित्वोवाच—" हे आर्य ! त्व मे राज्य पुनर्वर्तय, अह तवाऽऽज्ञाकरोऽस्मि " । चाणक्य उवाच—हे राजन् ! अधुनाऽनया प्रार्थनयाऽलम् । अह शरीरेऽपि निःस्पृहोऽस्मि । त्वया किं मे ? । ततो बिन्दुसार प्रतिज्ञाया मर्यादाया अचलन्त सागरमिव चाणक्य ज्ञात्वा स्वगृह ययौ । बिन्दुसारो गतमात्र सुबन्धुमन्त्रिणेऽकुप्यत् । सुबन्धुरपि शीतार्त इव कम्पमान उवाच— " हे राजन् ! मया सम्यगविज्ञाय चाणक्यो दूषित । अह गत्वाऽद्य चाणक्य क्षमयामि यावत् तावत् त्व प्रसीद । ' इति सुबन्धुर्गत्वा त कपटेन क्षमयामास । अचिन्तयच्चाय पुनर्नगरं न गच्छतु । सोऽनेन कुविकल्पेन राजान विज्ञपयामास—" चाणक्यमह तदपकारी पूजयिष्यामि । " राज्ञाऽनुज्ञात सुबन्धुश्चाणक्यस्यानशनस्थस्य पूजा कर्तुमारेभे । सुबन्धुरापातसुन्दरां पूजां कृत्वाऽन्यैरलक्षित करीषमध्ये धूपाग्निं चिक्षेप । पवनविस्तारितेन धूपवह्निना शीघ्र प्रोद्यज्ज्वाले करीषस्थले सति चाणक्योऽकम्पो दारुवद्दह्यमानस्तत्र पञ्चत्व प्राप्य देवोऽजनि ॥

## नवम सर्ग

### अशोकश्रीकुणालसम्पत्तीनां वृत्तान्तः ।

अथ सम्भाव्य चाणक्यद्रव्य लिप्सु सुबन्धुर्बिन्दुसाराच्चाणक्यगृहे वासं ययाचे । राज्ञाऽऽदिष्ट सुबन्धुश्चाणक्यगृहे प्रविष्टस्तालक-शतैस्तालितां तां पेटिकां ददर्श अचिन्तयच्च—"चाणक्यस्यात्र पेटायां सर्वस्व विद्यते, अन्यथा तालकशतेनेदृशी नियन्त्रणा न स्यात्। तत सुबन्धु पेटायास्तानि तालकानि कारागृहाऽऽकृष्टबन्दीचरणशृङ्खला इवात्रोटयत् । तत पेटामध्ये त समुद्ग दृष्ट्वा मनसि चिन्तयामास—"नूनं रत्नकोशोऽयं यस्य रक्षेदृशी वर्तते, स तमपि समुद्ग नालिकेरमिव स्फोटयामास । तत समुद्गमध्ये लोकोत्तरमहागन्धान् स ददर्श । स गन्धलुब्धो भ्रमर इव सुगन्धीन् गन्धानघ्राव् । विस्मित शिर उच्चैर्व्यधूनयच्च । अथ स तत्राक्षराङ्कित भूर्जमपश्यत् । एतद्गन्धबीजक स्यादिति स स्वय वाचयामास । तद्भूर्जपत्रे वक्ष्यमाणविषयो लिखित आसीत्, यथा—" य इमान् गन्धानाघ्राय मुनिचर्यया न तिष्ठत् स सद्यो यमस्यातिथिर्भविष्यति ।" एतान्यक्षराणि वाचयित्वा सुबन्धुरतीव व्यषीदत् । अथ चाणक्यस्य प्रयोगोऽन्यथा न भावीति निश्चिक्ये । तथापि सुबन्धुर्भूर्जप्रोक्तार्थविश्वासाय तान् गन्धानाघ्राप्य कमपि दिव्याहारमभोजयत् । आघ्रातगन्धे पुरुषे शीघ्र मृते सति तत्र सुबन्धुर्मुनिरिव विषयास्वाद मनसाऽपि नैच्छत् । अभव्य इवाविरक्तो जीविताशया नटितो बन्धुहीन सुबन्धुर्मुव न्यहार्षीत् ।

बिन्दुसारस्य पुत्रोऽशोकश्रीनामा बिन्दुसारे मृते पृथ्वीशासको बभूव । अशोकस्यापि कुणालनामा पुत्रोऽजनि, राजा कुमारभुक्ता-वुज्जयिनीं पुरीं ददौ । स कुणाल उज्जयिन्यां स्थितो राजनियुक्तै शिशुपालकै जीवितवत् स पाल्यमानोऽष्टवर्षेतोऽधिको बभूव । बालधारका अष्टवर्षाऽधिको बालो जात इति राज्ञे कथयामासु । राजाऽपि हृष्टो दध्यावय कुमारोऽध्ययनयोग्यो जात इति । ततो राजा कुमाराय

‘ प्राकृत सुखबोधायेति कुमारो अधीयउ ’ एवं लेखेऽलिखत् । कुमारस्य सपत्नी माता तत्रोपविष्टेम लेख राजपार्श्वादुपादायावाचयत् । मम पुत्रस्यैव राज्य स्यात्, न कुणालस्येति अन्यमनस्के राज्ञीदृश कूट चकार । सा निष्ठीवनार्द्रीकृतया नयनाञ्जनशलाकया नेत्रात् कज्जल-माकृष्याकारे बिन्दु ददौ । तेन ‘ कुमारो अंधीयउ ’ इत्यक्षर जातम् । अशोकोऽपि प्रमादेन तत्पत्रमवाचितमेव मुद्रयामासोज्जयिन्या प्राहिणोच्च । पितृनामाङ्कित त मुद्रालङ्कृतं लेखं कुमारो हस्ताभ्यामग्रहीत् । मूर्ध्नि च न्यधात् । ततो लेखकात् त लेख वाचयामास । लेखको वाचयित्वा विषण्णस्तूष्णीको बभूव । ततश्च कुमारो लेखक उदश्रुनेत्रे लेखार्थं वक्तुमशक्ते लेखकहस्ताल्लेख स्वयमग्रहीत् । दर्शनोत्प्रेक्षणै-र्वर्णानपि वाचयितु शक्त. कुणाल. स्वय त लेख वाचयामास । ‘ अधीयउ ’ इत्यक्षराण्यवलोक्य चिन्तयामास च–“ मौर्यवशे गुर्वाज्ञा-लङ्घक· कोऽपि नास्ति, यद्यहमेव प्रथम राजाज्ञा लोप्स्यामि तदाऽन्येषामपि तदाज्ञालोपमार्गो मत्कृत एव भविष्यति । ” ततश्च साहस-निधिर्मौर्यवंशसागरचन्द्र· कुणालस्तप्तशलाकया स्वयमेव नेत्रे आञ्जीत् ततोऽशोकश्रीर्महासाहसकारक त ज्ञात्वा धिक् कूटलेखकोऽस्मीति स्वं निनिन्द, अचिन्तयच्च–“ दुर्दैवाधिष्ठितो हताशयोऽहमस्मि, यतो मे प्रमादलिखितेन कुमारोऽन्धोऽभूत् । अय बालोऽद्य राज्य वा मण्डलित्व नार्हति । यस्य भक्तिर्मयीदृशी तस्येदृशमापतितम् । असौ यौवराज्य भुक्त्वा राजा भविष्यति इति मे मनोरथेनाधुनाऽलम् । अथ अशोकश्री कुणालाय महर्द्धिक ग्राम तत्सापत्नकुमाराय चोज्जयिनीं ददौ । परेद्यवि तं ग्राम भुञ्जानस्य कुणालस्य शरच्छ्रीनाम्न्या स्त्रिया सम्पूर्णलक्षण· पुत्रोऽभूत् । कुमारो वर्धापिकाभ्यो दासीभ्य पारितोषिक दत्त्वा पुत्रजन्मप्रयुक्त महोत्सव चकार । लब्ध्वा मातुर्मनोरथ्य वृथैवाद्य करोमीति राज्य लिप्सु स पाटलीपुत्रनगर जगाम । ततः स तत्र पुरे गीतविनोदेन स्वेच्छया परिभ्रमन् गान्धर्वेण शास्त्रेण साक्षात् तुम्बुरुरिव पुर-जनस्यातिप्रियो बभूव । पाटलीपुत्रनगरे यत्र यत्र सोऽगायत् तत्र तत्र पौरा हरिणा इव गीताऽऽकृष्टा बभूवु । पृथिवीपतिर्गान्धर्वेणाद्भुत

तं श्रुत्वा सोऽन्ध इति तमाहूय जवनिकाऽन्तरितं कृत्वा गातुमादिदेश। स यथास्थानं मन्द्रमध्यतारे षड्जादिभिः स्वरैः रागं पोषयन्नीदृशं पद्यप्रबन्धमगायत–"चन्द्रगुप्तप्रपौत्रो बिन्दुसारपौत्रोऽशोकश्रीपुत्र एष सुतोऽन्धीभूतः काकिणीं मार्गति"। राजाऽन्धेन पद्यप्रबन्धं गीयमानं श्रुत्वाऽपृच्छत्–"हे गायन! त्वं कोऽसि? इति ब्रूहि" स उवाच–"हे राजन्! अहं तवैव कुणालनामा पुत्रोऽस्मि, त्वदाज्ञालेखं दृष्ट्वा च स्वयमन्धोऽभूत्।" ततो राजा जवनिकां वेगेनापसार्य दृष्ट्वा स्वपुत्रमुपलक्ष्य बाहुभ्यामालिलिङ्ग। स राजोवाच च–"हे वत्स! अहं त्वयि संतुष्टोऽस्मि, तुभ्यमहं किं ददामि?।" कुमारोऽप्युवाच–"हे राजन्! अहं काकिणीं याचे।" किमेतद् याचितमिति राज्ञि वदति सति मन्त्रिण ऊचुः–"राजपुत्राणां काकिणी राज्यं भण्यते।" राजोवाच–"हे वत्स! त्वं राज्येन किं करिष्यसि? दैवापहृतनेत्रस्य ते तद्राज्यमन्याधीनं स्यात्।" कुमारोऽपि विज्ञापयामास–"हे पितः! मम पुत्रो भाग्येन जातः स राज्येऽभिषिच्यताम्।" अशोकनृपः पप्रच्छ–"कदा ते पुत्रोऽजनि।" कुणालोऽपि कृताञ्जलिः सन् प्रोवाच–"राजन्! सम्प्रत्येव मे पुत्रोऽजनि।" अशोकश्रीस्तदैव तं शिशुमनाययत्, तस्य नाम कृतोत्सवं स सम्प्रतिरिति चकार अमोघवागशोकश्रीस्तं बालकं स्तनन्धयमपि दशदिनानन्तरं स्वकीयराज्येऽस्थापयत्। आजन्म परमार्हतः सम्प्रतिकुमारो वयसा विक्रमेण लक्ष्म्या च ववृधे। स क्रमेण सदक्षिणं भरतार्द्धं साधयामास। प्रचण्डशासनः स इन्द्रतुल्यो बभूव।

इतश्च कालरात्रिवत् कराले तस्मिन् दुष्काले साधुसङ्घो निर्वाहार्थं समुद्रतटं ययौ। तदा साधूनामावृत्तिहीनं शास्त्रं विस्मृतमभूत्, यतो धीमतामपि विनाऽभ्यासेनाधीतं नश्यति। अथ सङ्घः सर्वो दुष्कालव्यतिगमे पाटलिपुत्रेऽमिलत्। यस्य यदङ्गाध्ययनोद्देशादि बभूव स तदाददे। ततस्तदा श्रीसङ्घ एकादशाङ्गान्यमेलयत्। दृष्टिवादनिमित्तं च किञ्चिद्विचिन्तयन् तस्थौ। तत्र सङ्घो नेपालमार्गस्थं भद्रबाहुं पूर्वधरं

ज्ञात्वा तमाह्वातु द्वौ मुनी प्रैषीत्। तौ मुनी तत्र गत्वा कृताञ्जली इत्यूचतु.–"हे महाराजाः! युष्मान् सङ्घस्तत्रागमनहेतवे समादिशति।" सोऽप्युवाच–"हे मुनी! मया यस्मान्महाप्राण ध्यानमारब्धमस्ति तद् द्वादशभिर्वर्षै. साध्यमित्यह नागमिष्यामि। महाप्राणे निष्पन्नेऽन्यस्मिन् कार्ये कस्मिंश्चिदागते सति मुहूर्तमात्रेण सूत्रार्थाभ्या संपूर्णानि पूर्वाणि गुण्यन्ते। अथ तौ मुनी ततो निवृत्य गत्वा भद्रबाहूक्त सङ्घायोचतु। सङ्घोऽप्यन्यौ द्वौ मुनी आहूयादिशत्–"हे मुनी! युवाभ्या तत्र गत्वाऽऽचार्यो वाच्यः–"यः श्रीसङ्घस्य शासन न करोति तस्य को दण्डो भवेदिति।" यदा स 'सङ्घबाह्य. स कर्तव्य' इति वदेत् तदा 'त्व तद्दण्डयोग्योऽसी'–ति उच्चै· स वाच्यः।" ताभ्या मुनिभ्या गत्वा तथैव निवेदित आचार्य उवाच–"भगवान् सङ्घो मैवं कार्षीत् किन्तु अदः करोतु, श्रीसङ्घो मयि प्रसादं कृत्वा मेधाविन शिष्यान् मम समीप प्रेषयतु। तेभ्योऽह सप्त वाचना. प्रदास्यामि। तत्रैका वाचना भिक्षाचर्यात आगतोऽह दास्यामि। तथा तिसृषु कालवेलास्वन्यास्तिस्रो वाचनाः प्रदास्यामि। सायाह्नप्रतिक्रमणे सम्पन्नेऽन्यास्तिस्रो वाचनाः पुनर्दास्यामि एव मत्कार्याबाधया सङ्घकार्यं सेत्स्यति। ताभ्या मुनिभ्या गत्वा तथोक्ते श्रीसङ्घोऽपि प्रसन्न स्थूलभद्रादिसाधुपञ्चशतीं तत्र प्रेषयामास। सूरिस्तान् मुनीन् प्रति प्रतिज्ञाता वाचना वाचयामास। ते मुनयोऽल्पा वाचना भवन्तीति तत उद्विज्य स्वस्थान प्रापु·। स्थूलभद्रस्तु तत्रैव तस्थौ। महामतिः स श्रीभद्रबाहुपादपार्श्वेऽष्टभिर्वर्षैरष्टपूर्वी भृशमपाठीत्। त्वमुद्विग्न· किम्? इति सूरिणोक्त. स उवाच–"हे भगवन्! अहं नोद्विजे, किन्तु मम कृते वाचना अल्पा एव भवन्ति।" तत सूरिरुवाच–"मम ध्यानं सम्पन्नप्रायमस्ति, तदन्ते तुभ्य त्वदिच्छया वाचना· प्रदास्यामि।" ततः स्थूलभद्र उवाच–"हे भगवन्! ममाधीतशेष सम्प्रति कियदस्ति?" तत· सूरिरुवाच–"सागरबिन्दूपमिता सख्या वर्तते।" ततो महाप्राणे ध्याने पूर्णे महामुनिः स्थूलभद्रो द्विवस्तूनानि दश पूर्वाणि यावत् समापयामास। अथ श्रीभद्रबाहुर्विहारक्रमयोगेन

पाटलीपुत्रनगरमागत्य बाह्योद्यानमाश्रयत्। तत्र तस्य यक्षादयोऽपि भगिन्य साध्व्य स्थूलभद्र वन्दितु समाययु । ता श्रीभद्रबाहु गुरु वन्दित्वा पप्रच्छु –" हे प्रभो ! सम्प्रति स्थूलभद्र क वर्तते ?" । स लघुदेवकुलेऽधुनाऽस्तीति ता प्रत्युवाच । ततस्तास्तमभिचेलु । स्थूलभद्रस्ता समागच्छन्तीर्दृष्ट्वाऽऽश्चर्यदर्शनाय सिंहरूप विचकार । ता सिंहरूप दृष्ट्वा भीता सत्यो गुरुवर्य श्रीभद्रबाहुमजिज्ञपन्–" हे भगवन् ! सिंहो ज्येष्ठार्य जग्रास, सोऽद्यापि तत्र तिष्ठति । आचार्योऽप्युपयोगात्तद्वृत्त ज्ञात्वाऽऽदिदेश–" यूय गच्छत, त वन्दध्व, तत्र युष्माक स ज्येष्ठार्यो वर्तते सिंहो नास्ति । " ततस्ता पुनस्तत्र ययुस्तत्र स्वरूपस्थ त दृष्ट्वाऽवन्दन्त । ज्येष्ठा च स्थूलभद्र प्रति स्वकथा मुवाच–" श्रीयकोऽस्माभि सह दीक्षामग्रहीत्, किन्त्वसौ क्षुधित एकभक्तमपि कर्तुं न शक्नोति । स मयोक्तोऽद्य पर्युषणायां पौरुषीं प्रत्याख्याहि " स प्रत्याख्यातवान् । पुनर्मया पूर्णेऽवधौ निर्दिष्ट, पूर्वार्द्धं प्रत्याख्याहीद पर्वाऽतिदुर्लभम्, इयान् कालश्चैत्यवन्दनादि परिपाट्याऽपि सुख व्यत्येष्यति तथैवासौ प्रत्यपादि । पुन समयेऽभिहितोऽसौ तथैवोक्त –" इदानीं तिष्ठ अपार्द्धमिति स तथैव चकार । अधुना रात्रिर्निकटाऽस्ति सा सुप्तस्य तव सुख यतिगमिष्यति, तस्मात्त्वमभक्तार्थं प्रत्याख्याहीत्युक्त स तथा चकार ततो निशीथे सम्प्राप्तेऽसौ देवगुरून् स्मरन् प्रवर्धमानक्षुत्पिपासाभ्यां पीडितो मृत्वा स्वर्गं ययौ । ऋषिघातो मयाकारीति विषीदन्ती प्रायश्चित्तार्थं श्रमणसङ्घस्य समीपमागता । सङ्घोऽपीदमुवाच–" त्वया शुद्धभावनयेदमकारि, तस्मात्ते किञ्चिदपि प्रायश्चित्त न कर्तव्यमस्ति । " ततो ऽहमित्यवोचम्– ' यदि जिन साक्षाद्वक्ति ततो मे मन समाधि जायेत, अन्यथा न । अथ सकलसङ्घोऽस्मिन् विषये कायोत्सर्गमदात् । तत शासनदेव्याऽऽगत्योक्त–" कार्यं ब्रूत, अह किं करोमि ?। " सङ्घोऽप्येवमुवाच–" इमां जिनपार्श्वं नय । " साऽवदत्–" निर्विघ्न गत्यर्थं कायोत्सर्गं कृत्वा तिष्ठत ", इति सङ्घे तत् स्वीकृतवति सति सा मा जिनपार्श्वमनैषीत् । ततो मया भगवान् सीमन्धर स्वामी

वन्दितः । ततो जिनो–" भरतादागता निर्दोषेयमस्ति " इत्यवदत् । ततोऽहं छिन्नसंशया सती शासनदेव्या निजावासमानीता, तत
श्रीमान् सीमन्धरस्वामी प्रसन्नः सन् मन्मुखेन श्रीसङ्घाय चत्वार्यध्ययनान्युपायनं प्रेषयामास । तान्यध्ययनानि नाम्ना–" भावना, विमुक्तिः,
रतिकल्प, विचित्रचर्या " इति प्रसिद्धानि जिनागमे सन्ति । तानि मयैकया वाचनया धृतानि । उद्गीतानि च तथाख्यानपूर्वकं सङ्घाय ।
तत्राऽऽद्ये द्वे अध्ययने आचाराङ्गस्य द्वे चूले स्त. । अथ सङ्घेनान्ये द्वे अध्ययने दशवैकालिकस्य चूले योजिते ", इत्युक्त्वा
स्थूलभद्रानुज्ञाताः स्वाश्रय ता जग्मु. ।

अयं स्थूलभद्रोऽपि वाचनार्थं गुरुमुपजगाम । गुरुस्तस्मै वाचना न ददौ । त्वमयोग्योऽसीत्यादिशत् । एष दीक्षादिनादारभ्य स्वा-
पराधान् व्यचिन्तयत् । स चिन्तयित्वाऽपराध न स्मरामीति गुरु प्रत्युवाच । पापं कृत्वा न मन्यसे पाप शान्तमिति गुरुरुवाच । ततः
स्थूलभद्र. सिंहरूपविकरणपाप स्मृत्वा गुरुचरणकमलयोः पपात । अहमेवं पुनर्न करिष्यामीति प्रतिज्ञायेदं मम क्षम्यतामिति गुरुं प्रत्यु-
वाच । पुनर्न करिष्यसि, यदिदं पुनरकार्षीस्तेन वाचना तुभ्यं न दास्यामीति गुरवोऽवोचन् । तत' स्थूलभद्रो गुरुं सर्वसङ्घेनाऽमानयत् ।
यतः कुपिताना महता प्रसादने महान्त एव समर्था भवन्ति । अथ सूरि' सङ्घं बभाषे–" यथाऽधुनाऽय सिंह विचकार तथाऽन्येऽप्यल्प-
पराक्रमा अतः परं विकरिष्यन्ति । अवशिष्टानि पूर्वाणि मत्पार्श्व एव सन्तु अन्यशिक्षाकृतेऽपि हि अस्याय दोषदण्डोऽस्तु । " स सङ्घे-
नाऽऽग्रहात् प्रार्थित उपयोगतोऽज्ञासीत्, यत्–" मत्तः शेषपूर्वाणामुच्छेदो न भावीति । " हे स्थूलभद्र ! त्वयाऽन्यस्मै शेषपूर्वाणि न
देयानीत्यभिप्राद्य भगवानाचार्य स्थूलभद्रमवाचयत् । अथ महामुनिः स्थूलभद्रः सर्वपूर्वधरो बभूव । त श्रीभद्रबाहुराचार्यपदे प्रतिष्ठा-
पयामास । श्रीमहावीरनिर्वाणात् सप्तत्युत्तरवर्षशते व्यतीते सति भद्रबाहुस्वाम्यपि समाधिना स्वर्गं ययौ ।

ततः सर्वश्रुतस्कन्धनिधानकोशः श्रीस्थूलभद्रो नीलकमलानां चन्द्र इव जनानां प्रबोधं जनयन् भुवि विजहार ।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप-परिशिष्टपर्वणः श्रीतपोगच्छाधिपति-
शासनसम्राट्-सूरिचक्रचक्रवर्ति-आचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ-शान्तमूर्ति-आचार्यश्री
विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि-प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न
व्याख्यानवाचस्पति-पन्न्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते
गद्यानुबन्धे बिन्दुसारादिजन्मादिश्रीभद्रबाहुस्वर्गगमनान्तवर्णनात्मको नवमः सर्गः ॥ ९ ॥



## दशमः सर्गः

### स्थूलभद्र धनदेवयोर्वृत्तान्तः ।

अथान्यदा स्थूलभद्राचार्यं श्रावस्त्या नगर्यां ययौ । ऋषिभिरावृत स बाह्योद्याने समवससार । तस्मिन्नुद्याने श्रावस्तीस्थ· सर्वो लोकस्तं विवन्दिषुर्हर्षोत्साहयुत आययौ । तदा जगन्मङ्गलकरो भगवान् स्थूलभद्रोऽपि सुधासारमधुरा धर्मदेशना चकार । तत्रत्य धनदेव-नामानं स्वसुहृदमनागत विज्ञायैवं दध्यौ–" मम प्रियमित्र धनदेवोऽत्र नास्ति, अन्यथा सर्व· पौरो लोक आगमत्, स पुन· स्नेह्यपि नाऽऽगमत् । स देशान्तरं गतो ग्लानो वा भवेदिति स्वयं तद्गृहं यामि । स विशेषतोऽनुकम्पनीयो वर्तते । " इति निश्चित्य तस्मादु-द्यानात् धनदेवस्य गृहेऽभिमुखैर्वन्दारुभिर्विन्द्यमानचरणकमल , सहर्षं नागराङ्गनागीयमानतपोगुण , श्रीमता भक्ताना छत्रैर्मण्डपाध.स्थित इव, उद्घाटितवृन्तकमलवद्विवलत्कन्धरमुखैरग्रगामिभिः श्राद्धजनैर्दृश्यमानमुखकमल., पदे पदे नगरीमध्यस्थचैत्यानि वन्दमानो जगाम । जङ्गमकल्पवृक्ष इव भगवास्तत्र प्रविवेश । धनदेवगृहनिवासिन्या धनेश्वर्या स दृष्टः । प्रशस्तवुद्धिर्धनेश्वरी सद्य आसनादुत्थाय भूतल-न्यस्तमस्तका स्थूलभद्रमुनिवरं ववन्दे । तत सा तस्मै श्रेष्ठासनमदापयत् । यतः सता भक्त्यनुसारेण गुरौ प्रतिपत्तय सजायन्ते । भगवानपि तदासनं प्रतिलिख्यालञ्चकार ।

अथ स धनेश्वरीं धर्मक्षणनिर्वाहवृत्तान्तेनानुकम्पयामास । तत पतिप्रवासदु·खिता धनेश्वरीं स पप्रच्छ–" हे भावसारे ! किं ते पतिर्धनदेवो न दृश्यते ? । " ततो धनेश्वरीदमुवाच–" हे भगवन् ! मम पतिर्गृहस्थितं वहिःस्थित च सर्वं धन व्ययते स्म ।

तत सर्वश्रुतस्कन्धनिधानकोश श्रीस्थूलभद्रो नीलकमलानां चन्द्र इव जनानां प्रबोध जनयन् भुवि विजहार ।

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप-परिशिष्टपर्वणः श्रीतपोगच्छाधिपति-
शासनसम्राट्-सूरिचक्रचक्रवर्ति-आचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारसमयज्ञ-शान्तमूर्ति-आचार्यश्री
विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि-प्राकृतविद्विशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न
व्याख्यानवाचस्पति-पन्न्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते
गद्यानुबन्धे बिन्दुसारादिजन्मादिश्रीभद्रबाहुस्वर्गगमनान्तवर्णनात्मको नवम सर्ग ॥ ९ ॥



सोऽर्थहीनोऽस्मिन्नेव पुरे तृणादपि लघुरभूत्, यत शरीरिणामर्था सर्वत्र पूज्यन्ते, किन्तु शरीराणि न। स पूर्वपुरुषनिधीन वेषयन्नपि न प्राप। यतो भाग्यहीनस्य समीपस्थाऽपि लक्ष्मीर्द्वीपान्तरस्थेव भवति। स वणिग्व्यापारेण द्रव्योपार्जनेच्छया देशान्तरं जगाम, यतो व्यवसायिना को विदेशो भवति ?।" अथ कृपानिधि सूरि श्रुतबलेन तद्गृहे निधिस्थान ज्ञात्वा तस्यै वक्तु चिन्तयामास। धर्मोपदेशच्छलेन च हस्तचेष्टयाऽत्र स्थितनिधि स्तम्भ तस्यै प्रदर्शयन् प्रोवाच–" अयि! संसारस्वरूप पश्य कीदृश, तव गृहमीदृक्, तव भर्तुर्वाणिज्य तादृशमस्ति।" भगवान् धनेश्वर्या मुहुर्मुहुरेव कथयित्वाऽऽर्हत धर्मं प्रभावयन्नन्यत्र विहर्तुं जगाम। ततो धनदेवो लाभोदयकर्महीनो यादृगगतस्तादृगेव वले पुनरागमत्। धनेश्वरी स्थूलभद्रागमनवृत्तान्त तमकथयत्। सोऽपि सहर्षं ता पप्रच्छ–' भगवान् किमकथयत् ?।" साऽप्युवाच–" अस्य स्तम्भस्याभिमुखहस्ताभिनयपूर्वक स्थूलभद्रेण धर्मदेशना विहिता। धनदेवोऽपीद दध्यो–" ज्ञानसागरस्य तस्याभिप्रायरहिता चेष्टा कदापि न भवति ' यत् स्तम्भमुद्दिश्य हस्ताभिनयो मुहुर्विदधे तस्मान्नूनमस्य स्तम्भस्याधो निधि सम्भाव्यते ' इति मत्वा स्तम्भमूल खानयामास। तत्र पुष्कल तत्पुण्यमिव द्रव्यमाविर्बभूव। तेन धनेन च स कुबेरतुल्योऽभूत्। स्थूलभद्रप्रसादोऽयमिति च न व्यस्मरत्। अन्यदा स वन्दनीयस्योपकारिणो मित्रस्य स्थूलभद्रमुनीश्वरस्य वन्दनाय पाटलीपुत्रनगरं ययौ। तत्र चोपाश्रये गत्वा सपरीवारं महामुनिं स्थूलभद्र ववन्दे। कृताञ्जलिरुवाच च–" हे भगवन्! त्वत्प्रसादेनाह दारिद्र्यसागरं तीर्णवानस्मि, त्वत्प्रसादस्यानृणो न भवामि, त्व मे गुरु स्वामी च, तदादिश किं करोमि ?।" त्वमार्हतो भूया इति स्थूलभद्रेणोक्त " ओम् " इत्युक्त्वा स पुन स्वस्थानमाजगाम। तेन च महामुनिना द्वौ शिष्यौ दीक्षितौ–एक आर्यमहागिरिनामा, द्वितीयश्चार्यसुहस्तिनामा च, यक्षार्यया बाल्यात्पालिताविस्यार्योपपदौ जातौ। तौ खड्गधारेव तीव्रमतीचारवर्जित व्रत परीषहेभ्यो निर्भीकौ

## एकादश सर्ग

### आर्यमहागिर्यार्यसुहस्तिनो वृत्तान्त ।

अथ महागिरि–सुहस्तिनौ भविकान् जनाननुगृह्णन्तौ धर्मं दिशन्तौ भुव विजह्रतु । तत्र जगद्गुरुर्महागिरिर्भगवान् कालक्रमेण वाचनाभिरनेकाञ्छिष्यानकार्षीत् । अन्यदा स स्वगच्छ सुहस्तिने समार्पयत्, स्वय तु जिनकल्पेन विहर्तुमेकचित्तो बभूव। तदानीं जिनकल्पस्य व्युच्छेदाद् गच्छनिश्रास्थितोऽपि स जिनकल्पोचितया वृत्त्या व्यहार्षीत् । अन्यदा ते महाशया धर्मदेशनाजल मेघा इव वर्षन्त पाटलीपुत्रनगरं ययु । तत्र वसुभूतिनामा श्रेष्ठी श्रीमता सुहस्तिना बोधित सन् जीवाजीवादितत्त्वविद् श्रावको बभूव । वसुभूति रहोरात्र सुहस्त्युपदिष्टधर्मानुवादेन स्वपरिवारानपि प्रबोधयितुमारभत। वसुभूतिना सादरं प्रबोध्यमाना अपि ते मन्दमतयो धर्माचार्यं विना न बुबुधिरे । ततो वसुभूतिर्गुरुमुवाच– ' हे भगवन् ! मया स्वजना बोधयितु न पारिता अतस्त्वमेव तान् बोधयितुमर्हसि " इति सुहस्तिस्वामी तान् बोधयितु वसुभूतिगृह जगाम । तत्र सुधानदीसमाना धर्मदेशना आरेभे । तदाऽऽर्यमहागिरिस्तत्र भिक्षार्थं प्राविशत् । सुहस्त्याचार्यस्तमभ्युत्थायावन्दत। ततो वसुभूतिश्रेष्ठी जगाद–" हे भगवन्त ! युष्माकमपि कोऽपि किं गुरुर्विराजते ?, यतो विश्ववन्दनी यैर्युष्माभिरागतोऽय वन्द्यते " तत सुहस्ती प्रोवाच–" हे श्रेष्ठिन् ! एते महाशया मम गुरव स‍न्ति । सदा त्याज्यभक्तपानादिभिक्षा गृह्णन्ति, यत एत ईदृशभिक्षा भुञ्जते, अन्यथोपवासं कुर्वन्ति । एषां नाम सुगृहीत, चरणरेणुरपि वन्दनीयोऽस्ति, भगवान् श्रीसुहस्त्याचार्य एव महागिरिं स्तुत्वा सर्वांस्तान् प्रतिबोध्य पुनरेव स्वस्थान ययौ । दृढभक्ति श्रेष्ठ्यपि विशेषत स्वजनानुवाच–" यदा भिक्षार्थमागतमी

दृश मुनिं यूय पश्यथ तदा त्यज्यमान भक्तपानादिक तस्मै दर्शयित्वा देय, तत् तद्गृहीतं युष्माक महाफल स्यात्।" वसुभूतेस्तद्वचनं तदीयस्वजनैः स्वीकृतम्। महागिरिर्द्वितीयदिने भिक्षार्थं तेषामेव गृहमगात्। ततस्ते श्रेष्ठिबन्धवो महागिरिमायान्तं दृष्ट्वा तस्मै कल्पमान दातुमिच्छवस्तथैव कर्तुमारभन्त। महागिरिरुपयोगेन तदशुद्ध ज्ञात्वोचे–त्वया–महत्यनेषणाऽकारि, यतस्ते त्वदुपदेशेन मह्य भिक्षामसज्जयन्।" सुहस्त्याचार्योऽप्यहं पुनरेव न करिष्यामीति वदन् पादाग्रे लुठन् श्रीमहागिरिं क्षमयामास।

इतश्च सम्प्रतिनामा राजोज्जयिनीं नगरीं जगाम, यतो राजान. कदापि क्वचित् स्वभूमौ तिष्ठन्ति। अन्यदा महागिरि–सुहस्तिनौ जीवन्तस्वामिप्रतिमारथयात्रा द्रष्टुमवन्त्यामाजग्मतुः। तौ सपरिच्छदौ पृथक्पृथगुपाश्रये तस्थतु., यतस्तयोर्गच्छो विपुलोऽतः एकत्र समावेशो भवितु नाशकत्। भक्ताना पौराणा मनोमयूरजलदः जीवन्तस्वामिरथ. सोत्सव नि ससार। ताभ्यामाचार्यवर्याभ्या सर्वेण श्रीसङ्घेन चानुगम्यमानः सरथो नगर्यामस्खलन् पर्यटति स्म। अथ रथे राजकुलद्वारं गते सति राजा सुहस्तिनं गवाक्षस्थित· सन् दूराद्ददर्श, एवं दध्यौ च–अय मुनिवरो मन्मनःकुमुदचन्द्रः क्वापि दृष्ट इवाभाति, किन्त्विद न स्मरामि।" राजैवं विचारयन् मूर्च्छितो निपपात, तदा 'आः किमेतदिति वदन् परिच्छदोऽधावत्। राजा व्यजनैर्वीज्यमानश्चन्दनैः सिच्यमानो जातिस्मरण प्राप्योदतिष्ठत्। स जातिस्मरणेन सुहस्तिनं पूर्वजन्मगुरुं ज्ञात्वा तदैवान्यत्प्रयोजन त्यक्त्वा वन्दितुमगमत्। स आर्यसुहस्तिनं सपञ्चाङ्ग वन्दित्वा जिनधर्मस्य कीदृश फलमिति पप्रच्छ। भगवान् सुहस्ती प्रत्युवाच–"जिनधर्मफल मोक्षः स्वर्गश्च।" "सामायिकस्य किं फलमि"ति राज्ञा पुनः पृष्टेऽव्यक्तस्य सामायिकस्य राज्यादिकं फलमस्त्येव सुहस्तिनाऽऽचार्येणोक्ते प्रतीतो राजा विश्वाससूचिका नखाच्छोटनिका मुहुः कृत्वा "एतदेवं नात्र संशय" इत्युवाच। प्रणम्य पुन पप्रच्छ च–"यूय मामुपलक्षयध्वेऽथवा न।" आचार्योऽप्युपयोगेन पूर्वभववृत्तं

ज्ञात्वोवाच–" हे राजन् ! अहं त्वां सम्यगुपलक्षये । तव पूर्वजन्मकथां शृणु, तथाहि—

हे राजन् ! वयं पुरा महागिर्याचार्यैस्सह विहरन्तो गच्छेन सह कौशाम्ब्यामागच्छाम । तत्र वसतेः संकीर्णतयाऽऽवां पृथक्पृथग वस्थितौ, यत आवयोः परिवारो महानासीत् । तत्रातिदुर्भिक्षमभूत्, तथापि लोकोऽस्मासु भक्तिमान् भक्तादिकं विशेषतो दातुमारेभे । अन्येद्युः साधवः एकस्य श्रेष्ठिनो गृहे प्रविविशुः । तेषां साधूनां पृष्ठतः एको दरिद्रोऽपि प्राविशत् । तत्र ते साधवो मोदकादिभिर्भिक्षां तस्य पश्यत एव लेभिरे । गृहीतभिक्षाणां साधूनां वसतिं प्रतिगच्छतां पश्चाद्गच्छन् स दीनोऽब्रवीत्–" मम भोजनं दीयतामिति " ते साधव ऊचुः–" गुरवः खलु जानन्ति, वयं गुरुपराधीना किञ्चिदपि दातुं न शक्नुमः ।" ततः स रङ्कः साधूनां पश्चादेव वसतिं जगाम । तत्र दीनात्माऽस्मान् दृष्ट्वा भोजनमयाचत । साधव ऊचुः–" भगवन् ! अनेन दीनमूर्तिना मार्गे भयमुच्चैर्भोजनं याचितम् । उपयोगपरायणैरस्माभिरेव ज्ञातं यदयं रङ्को भवान्तरे प्रवचनाधारो भावी । ततः स रङ्कोऽस्माभिः सप्रेम कथितः–" यदि परिव्रज्यां गृह्णासि तदा भोजनं लभसे ।" रङ्कोऽपि चिन्तयामास–" अहमग्रेऽपि सर्वकष्टमयोऽभूवम्, तस्माच्छ्रेय इष्टभोजनलाभकरं व्रतजं कष्टम् ।" ततः परिव्रज्यां स्वीकृतवन्तं रङ्कं तदैव मयाऽप्येष्टं मोदकादि यथारुच्यभोजयम् । स स्वादुमाहारं स्वादं स्वादं तथा बुभुजे यथा श्वासपवनस्यापि मार्गो दुःसंचरोऽभूत् । स तद्दिनस्यैव रात्रौ तेनातिपुष्कलेनाऽऽहारेण रुद्धश्वासो विपन्नः, यतः प्राणिनः श्वासजीवा भवन्ति । स रङ्कसाधुर्मध्यस्थभावेन स्थितो मृत्वाऽवन्तिराजस्य कुणालस्य पुत्रस्त्वमुदपद्यथाः ।"

राजा पुनः सुहस्तिनं विज्ञपयामास–" हे भगवन् ! अहं त्वत्प्रसादेनेमां पदवीं प्राप्तोऽस्मि । यदि त्वयाऽहं प्रव्राजितो न स्यां तदाऽस्पृष्टजिनधर्मस्य मे का गतिः स्यात् ' । तस्मादादिश, किमहं करोमि, पूर्वजन्मोपकारिणां युष्माकमहमनृणो न भवामि । अस्मिन्नपि

जन्मनि पूर्वजन्मनीव यूयं मे गुरवः सन्ति । अतो धर्मपुत्र मा कर्तव्यशिक्षयाऽनुगृहीत । कृपालुरार्यसुहस्ती भगवान् नृपमादिशत्- "राजन् ! इह परत्र च कल्याणाय जिनधर्मं स्वीकुरु, अर्हद्धर्मवता नृणां परलोके स्वर्गोऽपवर्गो वा भवेत् । इह लोके पुनः हस्ति-घोटककोशादय उत्तरोत्तरा सम्पद स्युः !

अथ राजा सुहस्त्याज्ञया तदग्रेऽभ्यग्रहीत्-" अर्हन् देवः, साधुर्गुरु, अर्हतो वचनम् प्रमाणम् ।" सम्प्रतिस्ततप्रभृति अणुव्रत-गुणव्रतशिक्षाव्रतपवित्रितः प्रधानश्रावको बभूव । अवन्ध्यश्रीः स त्रिसन्ध्यमपि जिनमानर्च । साधर्मिकेषु बन्धुष्विव वात्सल्य चकार । जीवदयातरङ्गितमना स सुधीरवदानरतो दीनेभ्योऽभ्यधिक दान ददौ । आवैताढ्यं प्रतापी निर्विकारधीः स त्रिखण्डं भरतक्षेत्रं जिन-मन्दिरभूषितं चकार । अन्यस्मिन् वर्षेऽवन्त्यामेव वसता सुहस्त्याचार्यपादाना सताम् चैत्ययात्रोत्सव सङ्घश्चकार । भगवान् सुहस्त्याचार्य सङ्घसहितश्चैत्ययात्राया मण्डप नित्यमलञ्चकार । स सम्प्रतिराजः कृताञ्जलि सुहस्तिस्वामिन शिष्यपरमाणुरिवाग्रे नित्यमुपविवेश । सङ्घो यात्रोत्सवावसाने रथयात्रा प्रारेभे । यतो यात्रोत्सवो रथयात्रया सम्पूर्णो भवति ।

अथ स्वर्णमाणिक्यद्युतिद्योतितदिङ्मुखो रथो दिवाकररथ इव रथशालातो निःससार । विधिज्ञैः श्रावकै रथस्थाया अर्हत्प्रतिमाया महर्द्धिभि स्नात्रपूजादि प्रारेभे । अर्हतः स्नात्रे क्रियमाणे सति स्नात्रजल रथात् पूर्वं जन्मकल्याणके सुमेरुशिखरादिव निपपात । वस्त्राहितवस्त्रैः श्राद्धैः सुगन्धिभिर्द्रव्यैः प्रतिमाया विलेपन स्वामिविजीप्सुभिरिव चक्रे । अर्हतः प्रतिमा मालतीकमलादिमालाभि पूजिता सती शारदमेघैर्वृता इन्दुकलेवाऽभात् । पुनरर्हतः प्रतिमा दह्यमानागरुभवाभिर्धूमराजिभिरावृता नीलवस्त्रै पूजितेव शुशुभे । जिनपूजाया आरात्रिकं ज्वलच्छिख दीप्यमानौषधीसमूहशैलशृङ्गविडम्बक श्राद्धैश्चक्रे । अथ ते परमार्हतैः श्रीमन्तमर्हन्त वन्दित्वा रम्यैरिवाग्रतोमृग

रथ स्वयमाचकृषे । नागरीभिरारब्धसद्धलीसकरासकश्चतुर्विधातोद्यवादाभिरामप्रेक्षणीयक, परित श्राविकाजनगीयमानबहुमङ्गल, प्रत्यद्ट प्रतिमन्दिरं विविधपूजां गृह्णन्, विविधै कुङ्कुमजलैरभिषिक्ताग्रभूतलो रथ शनै शनै सम्प्रतिराजस्य गृहद्वारमाजगाम ।

अथ सम्प्रतिराजोऽपि रथपूजनार्थमुत्सुक पनसफलवत् सर्वाङ्गोत्पन्नकण्टक आजगाम । नवीनानन्दसरोहसो राजा रथाभिरूढां जिनप्रतिमामष्टविधपूजयाऽपूजयत् । तदैव च सर्वान् सामन्तानाहूयसम्यक्त्व ग्राहयित्वैवमादिशत्—“ हे सामन्ता ! यूय यदिमां स्वामिन मन्यध्वे तर्हि सुविहितश्रमणानामुपासका भवत । हे सामन्ता ! युष्मद्द्त्तैर्द्रव्यैरपि मे किमपि प्रयोजन नास्ति । एव कृते सति मम प्रिय भवति । स एवमादिश्य सामन्तान् स्वस्वदेशे व्यसर्जयत् । ते गत्वा स्वामिभक्त्या श्रमणानुपासत । रथयात्रां प्रावर्तयन्, तथा तत्रानु गमन रथाग्रे पुष्पवर्षण चैत्यपूजां च ते व्यधु । इत्यादि श्रावकाचारं ते सर्वे तथा चक्रुस्तथा प्रान्तदेशा अपि साधु विहारयोग्या बभूवु, अन्यदा निशीथे सम्प्रतिनृपश्चिन्तयामास—“ अहमनार्येष्वपि देशेषु साधूना विहारं प्रवर्तयामि । ” तस्मादनार्यान् राजाऽऽदिदेश—“ अस्म त्पुरुषा यथा यथा मार्गयन्ति तथा तथा मम करं दद्ध्वम् । ” ततो राजाऽनार्येषु साधुवेषिणो नरान्प्रेषयामास । सम्प्रत्याज्ञया तेऽनार्यानिव भृशमन्वशिषन्—“ अहो एभिरेभिर्द्विचत्वारिंशता दोषै रहित वस्त्रपात्रान्नपानादिकमस्मभ्य दातव्यम्, इदमिदमध्येतव्य च । ततो युष्मासु सम्प्रतिराज सन्तुष्टो भविष्यति, अन्यथा कोपिष्यति । ” तत सम्प्रतिनृपस्य तुष्ट्यर्थमुत्सुकास्ते तत्पुरुषादिष्ट दिने दिनेऽकार्षु । एव मनार्येषु साधुयोग्याचारदक्षेषु कृतेषु सत्सु सम्प्रतिनृपो गुरु विज्ञपयामास “ हे भगवन् ! एते श्रमणा आर्यदेशेष्विवानार्यदेशेषु कुतो न विहरन्ति ? । ” तत सूरय ऊचु—“ राजन् ! ज्ञानदर्शनचारित्राण्यनार्यदेशेषु न प्रसरन्ति । ” राजोवाच—“ भगवन् ! साम्प्रतमनार्येष्व पि श्रमणान् प्रेष्य तेषामाचारकुशलतां जानीध्वम् । एव राज्ञोऽत्याग्रहवशादाचार्य कांश्चित् साधून् अन्ध्रद्रमिलादिषु देशेषु

विहर्तुमाज्ञापयामास । अनार्यास्तान् साधून् दृष्ट्वा सम्प्रतिनृपस्येमे पुरुषा इति ज्ञात्वा पूर्वशिक्षया तेभ्यो मुनिकल्प्यं भक्तपानादिकं ददु । साधवोऽनार्येष्वपि निरवद्य श्रावकत्वं दृष्ट्वा विस्मिता सन्तः स्वगुरवे पुनरूचुः । एव सम्प्रतिनृपो बुद्धिगर्भया स्वशक्त्याऽनार्यानपि देशान् साधुविहारयोग्यानकरोत् । राजा वीभत्स स्वपूर्वजन्मरङ्कत्व स्मरन् चतुर्ष्वपि पुरद्वारेषु महासत्राणि कारयामास । अथ निजोऽयं पर इत्यपेक्षाविवर्जित सर्वे भोजनार्थिनस्तत्रानिवारित भोजन लेभिरे । बुभुक्षुषु भुक्तवत्सु यदन्नाद्यत्रशिष्टमभूत् तत् पाचका विभज्याग्रहीपु । राज्ञा कोऽवशिष्टान्नादि गृह्णातीति पृष्टा पाचका ऊचु.–राजन् ! वय गृह्णीम ।" राजा तानादिशत्–"यदन्नमवशिष्यते तदकृताकारितार्थिभ्यः साधुभ्यो युष्माभिर्देयम् । अह युष्मभ्य द्रव्य दास्यामि, तेन यूय निर्वाह करिष्यथ । यतो द्रव्यवाञ्छन केष्वपि कार्येषु न सीदति ।" ते तद्दिनादारभ्य राजादेशादवशिष्टान्नपानादि तादृशेभ्य साधुभ्यो ददु. । तेऽपि शुद्ध दृष्ट्वा स्वीचक्रु ।

अथ श्रमणोपासको राजा कान्दविकास्तथा तैलघृतदधिविक्रेतॄन् वस्त्रविक्रयकानप्यादिशत्–"साधूना यत्किञ्चिदुपकारक भवति तदवश्य देयम्, युष्मभ्य तन्मूल्य दास्यामि, यूयमन्यथा न शङ्कध्वम् । ते हृष्टास्तथा कर्तुमारभन्त, यतो वणिजा पण्ये विक्रीयमाणे सति महानुत्सवो भवति । आर्यसुहस्ती तद्दोपयुक्त जानन्नपि प्रबलेन शिष्यानुरागेण लिप्तचित्त सेहे । इत आर्यमहागिरि सुहस्तिनमुवाच–"त्वमनेषणीय राजान्न जानन्नपि किं गृह्णासि ?।" सुहस्त्युवाच–"हे भगवन् ! यथा राजा तथा प्रजा., राजानुवर्तनपरा पौरा इद ददति ।" ततो महागिरिर्मायियमिति कुपित उवाच–"पाप शान्त खलु अत पर विसम्भोग किलावयो स्यात्, यत सामाचारीसमानै साधुभि. सङ्गतं साधु भवति, सामाचारीविभिन्नस्य तवात पर मार्गो भिन्नो जातः ।" भक्त सुहस्त्यपि बाल इव भिया कम्पमान आर्यमहागिरिपादान् वन्दित्वा कृताञ्जलिरुवाच–"हे भगवन् ! अहमप्यपराध्यस्मि, मम मिथ्यापापमस्तु । अयमपराध क्षम्यतामहं पुनरीदृशं

न करिष्ये ।" अथ महागिरिरुवाच–"तव को नाम दोष ? अथवा पुरा श्रीवीरस्वामिना ह्येतदुक्तम्–"मम शिष्यसन्ताने स्थूलभद्रमुने परं साधूनां सामाचारी लुप्तप्रकर्षा भविष्यति । स्थूलभद्रमुने पश्चाद्भावी तीर्थप्रवर्तको बभूव । त्वया तदिदं स्वामिवचनं सत्यापितम्, आर्यमहागिरिरसम्भोगिकत्वं स्थापयित्वा श्रीजीवन्तस्वामिप्रतिमां वन्दित्वाऽवन्त्या निर्जगाम । पूर्वं श्रीमतो महावीरस्य समवसरणे दशार्णभद्रसंबोधसमये शक्रे समागते यानि गजेन्द्रस्याग्रपदानि जातानि तत्र तीर्थे आर्यमहागिरिर्गत्वा तस्थौ । महागिरिस्तस्मिन् गजेन्द्रपदाख्ये महातीर्थेऽनशनेन शरीरं त्यक्त्वा स्वर्गं ययौ । सम्प्रतिराजोऽपि श्रावकव्रतं पालयन् पूर्णायु सुरत्वं प्राप, क्रमेण स सिद्धिं गमिष्यति ।

अथार्यसुहस्त्यन्यत्र विहृत्य पुनः श्रीजीवन्तस्वामिप्रतिमां वन्दितुमुज्जयिनीं समाययौ । बाह्योद्याने समवससार च । स पुरमध्ये वसतिं याचितुं द्वौ मुनी प्रैषीत् । तौ तु भद्राख्यायाः श्रेष्ठिन्या गृहं जग्मतुः । साऽपि तौ नत्वापृच्छत्–"युवां किमादिशथ ", तावूचतु –"आवामार्यसुहस्तिनः शिष्यौ स्वः, हे कल्याणि ! तदाज्ञयाऽऽवां निवासं प्रार्थयावहे ।" ततः सा विशालां वाजिशालां वसतिमर्पयामास । ततश्च सपरीवारः सुहस्त्याचार्यस्तामलञ्चकार ।

अन्यदा प्रदोषसमये आचार्यैर्वरं नलिनीगुल्माख्यमध्ययनमावर्तितुमारेभे । तदा देवतुल्यो भद्रापुत्रोऽवन्तिसुकुमालः सप्तभूमप्रासादे विराजमान आसीत् । स्वर्गाङ्गनासदृशीभिर्द्वात्रिंशत्स्त्रीभिः क्रीडन् स कर्णरसायने तस्मिन्नध्ययने कर्णं ददौ । सम्यक् श्रोतुं च प्रासादादुत्तीर्य शीघ्रं वसतिद्वारमाययौ । मयेदं कुत्रानुभूतमिति चिन्तयन् स संजातजातिस्मरणः आचार्यसमीपमाययौ, उवाच च–"हे भगवन् ! अहं भद्रायाः सुतोऽस्मि, प्रागहं नलिनीगुल्मविमाने देवोऽभूवम् । मया नलिनीगुल्मं विमानं जातिस्मृत्या स्मृतम् । अथ पुनरहं तत्रैव गन्तुं परिव्रिव्रजिषामि । तस्माच्च विमानं प्रार्थयमानं मां परिव्राजय ।" आर्यमिश्रा ऊचुः –"हे बालक ! त्वं सुकुमारोऽसि, यतो लोहचणका

सुखदा वह्नयोऽपि सुस्पर्शा, परञ्च जिनप्रणीतमतीचारवर्जितं तपोदुष्करमस्ति" भद्रापुत्रोऽप्युवाच—"अहमतिशयितं प्रव्रज्योत्कण्ठितोऽस्मि। सामाचारीं चिरतरं पालयितुं न शक्नोमि, तस्मादादावेवानशनपुरस्सरं सत्त्वमालम्ब्य परिव्रज्या ग्रहीष्यामि। इदं कष्टमल्पं खलु।" गुरुरुवाच "हे महाभाग! यदि त्व परिव्रज्या जिघृक्षसि तर्हि कर्मणि स्वबन्धूननुज्ञापय।" तत स गृहं गत्वा कृताञ्जलिर्निजान् बन्धून् पप्रच्छ, परञ्च ते नाज्ञापयन्। ततो भद्रासुत· स्वयं केशास्तत्रैवोदखनत् गृहपराङ्मुखः स साधुलिङ्गं च जग्राह। अथ स्वशरीरेऽपि निर्ममस्ताहग्रूपः स सुहस्त्याचार्यपार्श्वं जगाम। सुहस्त्यपि स्वयमेव गृहीतसाधुलिङ्गो मा भूदिति प्रव्रज्याविधिमुच्चरस्तं परिव्राजयामास। चिरकालं तपःकष्टनिर्जरा कर्तुमसमर्थ· स गुरून् पृष्ट्वाऽनशनं चिकीर्षुरन्यत्र ययौ। गच्छन् च स· सुकुमालपदद्वयान्निःसरच्छोणित-बिन्दुभिः पृथ्वीं सेन्द्रगोपामिव चकार। स स्थाने स्थाने चिताभस्मधूसरीकृतधरातल यमस्य क्रीडास्थानमिव श्मशानं ययौ। स समाहित· पञ्चपरमेष्ठिनमस्कारं स्मरन्ननशनेन कन्थारिकाकुडङ्गस्य मध्येऽतिष्ठन्। शोणितस्रावयुतानि तस्य पदानि लिहाना काऽपि सबाला जम्बुकी तस्मिन् प्रदेशे समाजगाम।

अथ सशिशुर्जम्बुकी महता तत्पादप्रक्षरच्छोणितपङ्कगन्धेन कन्थारिकावनमध्ये प्राविशत्। शोधयन्ती च सा रात्रे· प्रथमप्रहरे तत्पादं शोणितपिच्छलं प्राप। यमसोदरेव त भोक्तुमारेभे, सा चटच्चटिति चर्म त्रटत्रटिति मास घगद्धगिति मेद· कटक्कटित्यस्थि भक्षयन्ती तस्यैक पाद निरशेषयत्। अपरं पादं च जम्बुकीशिशवश्चखादु। तथापि स नाकम्पत, प्रत्युत सात्त्विकः स ता पादभोक्त्रीं जम्बुकीं पादसंवाहिकामिवामन्यत। एवं सा रात्रिद्वितीयप्रहरे तस्योरू अखादत्। स जीवोऽय सम्यक् तृप्यत्विति दया चकार। सा

जम्बुकी रात्रितृतीययामे तस्य तुन्द चखाद । स व्यचारयत्—"एषा तुन्द न मथति, किन्तु मम कर्म ।" रात्रेश्चतुर्थे प्रहरे स महासत्त्वो मृत्वा नलिनीगुल्मे विमाने महर्द्धिर्देवो बभूव ।

अथ सुरगणोऽय महासत्त्वो महानुभावो वन्दनीयोऽस्तीति तच्छरीरस्य तदा महिमान चकार । अवन्तिसुकुमालमपश्यन्त्यस्तद्भार्या सुहस्तिन पप्रच्छु:—"हे भगवन् ! अस्मत्पति कथमभूत्तदाख्याहि" तदा सुहस्त्यप्युपयोगेन तस्य तथाभूत सर्वं ज्ञात्वा ताभ्यो मधुरवाचोवाच । अथ ता गृह गत्वा भद्राया पार्श्वे सर्वं त वृत्तान्तमूचु । अथ सा भद्रा तनूमाता रात्र्यतिगमे कन्थारीवनयुक्ते श्मशाने ययौ । सा नैऋत्यां दिश्याकृष्ट पुत्रशरीरं दृष्ट्वा बाष्पच्छलतो जलदानोधतेव रुरोद । स्नुषाभिः सहिता रुदती भद्रा विललाप—"किमस्मानिव प्राणानपि किं तत्यजिथ ? हे वत्स ! प्रव्रजितोऽपि त्वमेकस्मिन्नपि दिने विहारेण मम गृहाङ्गण किं न भूषयामासिथ ? । अत परं का कल्याणी रात्रिर्भविष्यति या त्वां स्वप्ने दर्शयित्वाऽस्मान् सञ्जीवयिष्यति । यदि व्रतेच्छया निर्मोहीभूयास्मानत्यजस्तर्हि गुरुष्वपि निर्मोहोऽभू:, यत्तेऽपि त्वया त्यक्ता ।" भद्रैव बहुतरं विलप्य रुदती शिप्रानदीतीरे तस्य समयोचितमौर्ध्वदेहिक कर्म चकार । तस्य स्त्रियोऽपि विलाप विलाप शिप्रानद्या क्लिन्नवस्त्राः शङ्कोद्धरण चक्रिरे । तदा भद्रा पुत्रमरणशोकवह्निकरालिता सती शान्तिसुधानदीं प्रव्रज्यां अहीतुमैच्छत् । अथ गृह गत्वैका गर्भिणीं स्नुषां त्यक्त्वाऽन्यस्नुषाभि सह परिव्रज्यां जग्राह । कालक्रमेण गुर्वी प्रसूतपुत्रेणावन्तिसुकुमालस्य चिताभूमितले विशाल देवमन्दिरं व्यरचयत् । अवन्तिभूषण तद्देवकुलमद्यापि महाकालाभिधानेन लोकेऽतिप्रसिद्धमस्ति । भगवानार्यसुहस्त्यपि समये गच्छ प्रधानशिष्याय समर्प्यानशन कृत्वा देह त्यक्त्वा देवलोक ययौ ।

# द्वादश सर्ग

## धनगिरिवृत्तान्त ।

अथ सुहस्त्याचार्यवंशे क्रमात् प्रवचनाधारो वज्रस्वामी बभूव । तस्य कथा विस्तार्यते तथाहि—

अस्मिन्नेव जम्बूद्वीपे दक्षिणभरतार्द्धालङ्कारऋद्धिभि स्वर्गोपमोऽवन्तिनामा देशोऽस्ति । तत्र तुम्बवननाम सन्निवेशमस्ति । तच्च लक्ष्मीनिवासस्थानमिव देवानां हर्षदमस्ति । तत्र लक्ष्मीदेवीपुत्र इव पर्वतीकृतधनराशिर्धनगिरिर्नामा श्रेष्ठिपुत्रो बभूव । तारुण्यभूषित-देहस्यापि तस्य प्रशमद्वारपालरक्षिते हृदि कामो न प्राविशत् । नीतौ धर्मादर्थो भवतीति पठ्यते, परन्तु स पात्रेभ्योऽर्थं नियोजयन्न र्थादपि धर्मं चकार । सोऽर्हद्धर्मैतत्परो ब्रह्मचर्यपरिणाम स्वर्गापवर्गफल जानन् कन्या परिणेतु नैच्छत् । तद्विवाहोत्सवकाङ्क्षिणौ तस्य पितरौ धनगिरिकृते कन्यां यत्र यत्र कुले प्रार्थयामासतुस्तत्र तत्र धनगिरिर्गत्वा स्वयमकथयत्–" अह प्रव्रजिष्यामि " कथयतो मम दोष कोऽपि नास्ति । इतश्च धनपालश्रेष्ठिन सुनन्दानाम्नी कन्योवाच–" मा धनगिरये ददातु, स मे वरो भवतु । धनपालश्रेष्ठ्यपि स्वयवरतत्परा सुनदां दीक्षा जिघृक्षवेऽपि धनगिरये ददौ । सुन दाया आर्यशमितनामा भ्राता सिंहगिरिसूरिपादपार्श्वे प्रागेव परिव्रज्याम ग्रहीत् । अन्यदा ब्रह्मबुद्धिरपि धनगिरिर्ऋतुस्नातां सुनन्दामुपबुभुजे, यतो भोगफल कर्मान्यथा न भवति ।

इतश्च गौतमस्वामिनाऽष्टापदगिरौ प्ररूपित पुण्डरीकाध्ययन येन वैश्रमणसामानिकदेवेनावधारित स एव देवस्तदा सुनन्दोदरे स्वर्गात्प्रच्युत्यावातरत् । विमलमतिर्धनगिरिस्तां गर्भवतीं ज्ञात्वा–" एष ते गर्भोऽनुपमो भविता, अह प्रव्रजामि, त्वया सह ममान

भिमत एव सम्बन्धोऽभवत्, अत· परं परिव्रज्यैव ममातिप्रिया, तव पुन कल्याणं भूयात् ।" इत्युक्त्वा भाटकगृहीतकुटीमिव तां विहाय सिंहगिरिगुरुपार्श्वे परिव्रज्यामग्रहीत् । अथ स द्वाविंशतिं परिषहान् सहमान स्वदेहेऽपि निरीहोऽतिदुस्तपं तपश्चकार, स स्थैर्यार्जवविनयादिशिष्यगुणयुतो गुरुपार्श्वात् कूपाज्जलमिव शास्त्रतत्त्व जग्राह ।

तत सुनन्दाऽपि नवमास्या व्यतीताया सत्या जनानन्द पुत्रं सरसी कमलमिव जनयामास । सूतिकागारे प्रतिजागरणार्थमागताः सुनन्दाया प्रिया· स्त्रियस्तं बालमिदमूचु –" हे जात ! यदि तव पितोत्कण्ठित सन् न प्राव्रजिष्यत् तदा जातकर्मोत्सवोऽतिमहानभविष्यत् खलु । स्त्रीजने सत्यपि पतिं विना गृहं न शोभते, यथा बह्वीभिस्ताराभिश्चन्द्र विनाऽऽकाशमण्डल न राजते ।" स बालोऽपि ज्ञानावरणलाघवात् सज्ञावास्तासा सलापं समाहित· शुश्राव, अचिन्तयच्च–" मम पिता परिव्रज्या जग्राह ।" एव चिंतयन्नेव स बालो जातिस्मरणं प्राप । सजातजातिस्मरणः स बाल ससारस्य नि सारता जानन् क्षीरकण्ठोऽपि पितृमार्गे पथिकतामैच्छत् । मम माता कथमुद्विज्य मा त्यक्ष्यतीति विचिन्त्य मातृक्रोडस्थोऽपि रात्रिन्दिव महातारस्वरेण रुरोद । रागमधुरगानै· क्रीडनकदर्शनैर्वस्त्रदोलान्दोलनाभिश्चाटुवचनैः क्रोडनृत्यलीलाभिर्मुखातोद्यवादनैः शिरश्चुम्बनेनापि च स रोदनान्न विशश्राम । एव रुदतस्तस्य षण्मासी व्यतिगता । सुनन्दाऽपि तेन पुत्रेण वैराग्यमाप ।

अन्यदा धनगिर्यार्यशमितादिशिष्ययुतः सिंहगिरिस्तस्याः सुनन्दाया पुरे समायात् । ततो धनगिर्यार्यशमितौ वसत्या स्थितं सिंहगिरिं गुरुं नत्वा विज्ञापयामासतुः–" हे भगवन् ! अस्मिन् सनिवेशने आवयो· स्वजनाः सन्ति, तद्भवता नियोगेन तान् वन्दयितुं प्रेरयाव· ।" तयोरेवं पृच्छतोस्तत्त्वविदा वरः सिंहगिरिः शुभसूचक शकुनं दृष्ट्वोवाच । अद्य युवयोर्महाल्लाँभो भावी, यद् युवा मुनी सचित्तमचित्तं वा

प्राप्नुयात तन्ममाज्ञया गृह्णीयावम्।" अथ तौ श्रमणौ सुनन्दागृह जग्मतु । अन्यस्त्रीभिस्तद्द्वारि समायातौ तौ मुनी सुनन्दाया निवेदितौ। सर्वा स्त्रिय ऊचु -" हे सुनन्दे ! त्वयाऽय पुत्रो धनगिरे समर्पणीय, ' एष क नेष्यति ' इति दृश्यताम् ।" दु खिता सा सुनन्दाऽपि त स्तनन्धय बाल गृहीत्वा तेन पुत्रेण निर्वेदिता धनगिरिम्प्रत्युवाच–" हे भगवन् ! एतावत्कालपर्यन्तमय बालक भालय मया रक्षित, अनेनाह तु नटिताऽस्मि, अय दिवानिशमुच्चै रोदिति । यद्यपि त्व प्रव्रजितोऽसि तथाऽप्येन स्वपुत्र गृहाण । मामिवैन सम्प्रति न त्यज ।" वदता वरो धनगिरिरपि स्मित्वोवाच–" हे कल्याणि ! अह तव पुत्र रक्षिष्यामि परन्तु त्व पश्चात्ताप प्राप्स्यसि, एव सर्वथा न कुरु, यदि करोषि तर्हि विचार्य साक्षिणा समक्ष कुरु। पुनस्त्वमिम बालक न प्राप्स्यसि ।" तत सुनन्दा साक्षिण कृत्वा सविषाद धनगिरये पुत्र समर्पयामास । सोऽपि त जग्राह । स बालको धनगिरिणा पात्रबन्धे स्थापितो गृहीतसङ्केत इव रोदनाद् व्यरमत् । तत स्तावृषी गुर्वाज्ञापालकौ सुनन्दागृहाद् गृहीतशिशू पुनर्गुरुपार्श्वमाजग्मतु । ततो गुरुर्महासारस्य तस्य पुत्ररत्नस्य भारेण नमद्भुज धनगिरि मवलोक्योवाच–" त्व भिक्षाभारेणाऽऽयासित इव वर्तसे, त ममार्पय, तव भुजो विश्राम्यतु ।" साधु श्रीपात्र त बालक कान्त्या सुर कुमारमिव गुरो समर्पयामास । तेजसामधिपमिव तेजोभि प्रकाशमान त शिशुमाचार्यो हस्ताभ्या स्वय जग्राह। सिंहगिरेर्गुरोर्भूपीठ तस्य शिशोरतिभारेण जल जिघृक्षोरञ्जलिरिवानमत्। तद्भारभग्नुरहस्तो गुरु सविस्मय उवाच–" अहो पुरुषरूपधरमिद वज्र धर्तुमह न शक्नोमि, अय पुरुषो महापुण्य प्रवचनाधारो भावी, यत्नेन रक्षणीयोऽयम्, यतो रत्न प्रायेणापायप्रिय भवति ।" इति गुरु पालनाय साध्वीनां पार्श्वे समर्पयामास । तस्य वज्रसारस्य ' वज्र ' इति नाम चकार ।

अथाऽऽर्यिका भक्ते शय्यातरकुले गत्वा त बाल स्वात्मानमिव पालयितु कथयित्वा ददौ। कुमारभरणनिपुणा शय्यातर्योऽपि तं

बालक प्रीत्या स्वस्वपुत्राधिक पश्यन्त्य पालयाञ्चक्रु । तासा सौभाग्यनिधानभू स शिशु क्रोडात्क्रोड कमलात्कमल हस इव सचचार । चित्तोल्लासपुरस्सरं त बालमुल्लापयन्त्यश्च ता हर्षवातुलता प्रापु । परस्परं स्पर्धमाना इव च वज्र सचक्रु । बालोऽपि वज्र सयमाद् वृद्ध इव तासा दु खजनक किञ्चिदपि बालचापल्य नाकर्षीत् । प्राणरक्षणार्थं प्रासुक बुभुजे, यत स जातिस्मरणसजातविवेक आसीत् । यदा च नीहारादि चिकीर्षाञ्चिकार तदा बालधारिषु सदा स्पष्टा चेष्टां चकार । समान प्रीतिगुणं दर्शयन् वज्र सर्वेषा शय्यातरकुमाराणां जन्मभूरिवाभूत् । ज्ञानोपकरणपाट्याद्यादानेन च स वज्र प्रतिवासरं बालक्रीडनेनाऽऽर्यिका प्रीणयामास । सुनन्दाऽपि शीलवन्तं सुरूपं वज्रमवलोक्य मत्पुत्र इति वादिनी शय्यातरेभ्यो ययाचे । ते “ तवास्य बालस्य मातृपुत्रसम्बन्ध वय न जानीमः किन्त्वसौ गुरूणा न्यासो विद्यत ” इत्यूचु । एवमुक्त्वा शय्यातरास्तस्यै पुत्र न समर्पयामासुः । सा परधनमिव दूरस्थैव वज्रमपश्यत् । सा महतोपरोधेन तेषामेव गृहे त पुत्रं दुग्धपानादिना धात्रीव लालयामास ।

इतोऽपि चाचलपुरविषयलक्ष्मीविभूषणे कन्या पूर्णा चेति द्वे नद्यौ प्रसिद्धसज्ञे स्त , तयोर्नद्योर्मध्ये केऽपि तापसा न्यवात्सुः, तेषा मध्ये एकस्तापसः पादलेपज्ञोऽभवत् । स पादलेपं कृत्वा पादुके परिधाय जलेऽपि स्थल इव पादौ न्यस्य सञ्चचार । एवं च स नित्यं पादुकारूढो जलमार्गेण नगरे जने विस्मय जनयन् गतागत चकार । स तापस श्रावकान् प्रत्येव प्रजहास—“ युष्माकं दर्शनेऽस्माकमिव कस्यापि कोऽपि प्रभावो नास्ति । ” अथैकदा योगसिद्धो महातपा वज्रमातुल शमिताऽऽचार्यस्तत्र विहारक्रमयोगेनाऽऽजगाम । तत आर्हतास्तस्मा आचार्यवर्याय तापसकृत महान्त स्वदर्शनोपहासं कथयामासु । तदाकर्ण्य श्रुतज्ञाने स्फुरत्यपि मतिबलेन ज्ञात्वा स आचार्य उवाच—“ अस्य तपस्विनस्तापसस्य न काऽपि तप.—शक्ति , किन्तु स केनापि प्रयोगेण युष्मान् सर्वान् प्रतारयति । यथा

कौतुकावहमकालपुष्पादि दर्श्यते तथैतदपि विज्ञानमस्ति, किन्त्वीदृशी तव शक्तिर्नास्ति। उपदेशमात्रसिद्धे युष्मादृशामपि साध्ये विज्ञाने विस्मय कृत्वा तापसान् मा श्रद्धत्त। यदि युष्माक विश्वासो नास्ति तर्हि स तापस आहूयताम्। गृहाऽऽगतस्य पादौ प्रक्षाल्नीयौ पादुके अपि प्रक्षालये।" तत श्रावका माया कृत्वा तापसं निमन्त्रयामासु । स तापस एकस्य श्रावकस्य गृहे जनै परिवृत समाययौ। तदा सकुटुम्बोऽपि श्रावको भक्तिनाटक दर्शयन् गृहद्वारमुपागत स तापसमुवाच—"हे भगवन्! भवत पादानह प्रक्षाल्यामि, यतो ये त्वत्पादौ क्षालयन्ति ते आत्मान क्षालयन्ति। तस्मादस्माननुकम्प्य त्वमेव निस्तारयितुमर्हसि, यतो महात्मानो भक्तिशालिना भक्तिं न स्खलयन्ति।" अथ स श्रावकोऽनिच्छतोऽपि तस्य तापसस्योष्णजलेन पादौ पादुके च प्राक्षालयत्। स श्रावकस्तस्य तापसस्य पादपादुकाशौच तथा चकार यथालेपलेशोऽपि नीचेऽनुराग इव न तस्थौ। स श्रावकशिरोमणिर्महत्या सामग्र्या त तापसमभोजयत्, यतो मिथ्यादृष्टयोऽपि कार्यवशात् पूजनीया भवन्ति। तेन लेपदूरीकरणेन दुर्मनायितस्तापसो भोजनास्वाद विगोपागमशङ्कया नाज्ञासीत्। जलस्तम्भकुतूहलदिदृक्षुलोकैर्वृत कृतभोजन स तापस पुनरपि नदीतीरं ययौ। अल्पबुद्धि स कोऽपि लेपाश्रय स्यादिति मिथ्यासाहसं कृत्वा जले प्रविवेश। तत स तापसकुमार कमण्डलुरिव बुडबुडशब्द कुर्वन् नदीजलेऽब्रुडत्। " अनेन मायाविना वय कियच्चिरं मोहिता स्म " इति मिथ्यादृष्टीनामपि तदा मनो मलिनीबभूव। तदा जने दत्तताले तुमुलकारिणि च सति श्रुतस्कन्धपारङ्गता आचार्या अपि तत्र समाजग्मु। तत स्वस्य दर्शनस्य प्रभावनां चिकीर्षव आचार्या नदीमध्ये योगविशेष न्यक्षिपन्। महात्मनां धुर्य आचार्यवर्यो हे पुत्र! त्वमेहि यथा वय तव परतटे याम " इत्युवाच। ततस्तस्या नद्यास्तटद्वये मिलिते सपरिवार आचार्य परतीरभूमिं जगाम। तत सर्वे तापसा आचार्यं दर्शित वमतिशय दृष्ट्वा वैराग्य प्रापु । तथा सर्वो जनस्तद्भक्तो बभूव। अथ मथितमिथ्यात्वा सर्वे तापसा आर्यशमिताऽऽचार्यस्य पार्श्वे

प्रवव्रजुः । ते ब्रह्मद्वीपवास्तव्यतया तदन्वये ब्रह्मद्वीपिकनामान आगमोदिताः श्रमणा अजायन्त ।

इतश्च तत्रस्थो वज्रो यदा त्रिवर्षोऽभूत् तदा तत्र घनगिर्यादय साधव आगमन् । " यदा घनगिरिरागमिष्यति तदा स्वं पुत्रमह ग्रहीष्यामि " इति चिन्तयन्ती सुनन्दा तेषु समागतेषु मुमुदे । सुनन्दाऽपि महर्षिभ्यः स्वपुत्रं ययाचे, ते पुनर्न ददुः, प्रत्युतेदृशं प्रत्यूचुः–" हे मुग्धे ! अय बालकस्त्वयाऽस्मभ्यमयाचितोऽदायि । तदा दत्त वान्तान्नमिव क. पुनर्ग्रहीतु काङ्क्षति ? । दत्तेषु वस्तुषु विक्रीतेष्विव स्वामित्वमपगच्छति । अतस्त्व सुत दत्त्वा न याचस्व, यतस्त्वयाऽय बाल' पराधीनीकृतः । " उभयो पक्षयोरेव-मुच्चैर्विवदमानयोर्लोक एवमवादीत्–" अमु विवादं राजा निश्चेष्यति । " ततः सुनन्दा लोकयुता राजसभाया जगाम । ते श्रमणा अपि सङ्घेन सह ययु. । तत्र सुनन्दा राज्ञो वामभागेनोपविवेश । श्रीमान् सर्वः सङ्घो राज्ञो दक्षिणपार्श्वे न्यसीदत् । अपरेऽपि यथास्थानमस्थुः । राजा द्वयोर्वचन परिभाव्य जगाद–" अयं बालो येनाऽऽहूतो यस्य पार्श्वे समायाति तस्यासौ भवतु । " त निर्णयमुभावपि पक्षौ स्वीच-क्रतुरिति च जगदतु.'–' आदौ कः पुत्रमाह्वातुमर्हति ? । " स्त्रीपक्षावलम्बिनः पुरवासिन ऊचुः–" व्रतिनामेवाय शिशुश्चिरसंघटित-स्नेहस्तद्वचन नोल्लङ्घयति, दुष्करकारिणीयं मातैव प्रथममाह्वयतु, यत इयं नार्यतोऽनुकम्पनीयाऽस्ति अन्यथा न । " तत. सुनन्दा बहूनि बालकक्रीडनकानि नानाविधानि भक्ष्याणि च दर्शयन्त्येवमुवाच–" हे बालक ! तव क्रीडार्थममी हस्तिनोऽमी अश्वा अमी रथा मयाऽऽ-नीतास्तस्मात्तान् गृहाण तद्ग्रहणार्थं त्वमागच्छ । हे दारक ! मोदका मण्डका द्राक्षाः शर्करा अन्यच्चादो वस्तु, एषु यदिच्छसि तदस्ति त्वमागच्छ गृहाण । हे आयुष्मन् ! तवजनने मम सर्वाङ्ग कृशमभूत्, त्वं चिर जीव, चिरं नन्द, मा सुनन्दा मोदय । त्व मम देवो-ऽसि, मम त्वमेव पुत्र आत्मा जीवनं चासि, अतो मा दीना परिष्वङ्गेण जीवय । हे वत्स ! त्व पश्यतो लोकस्य मध्ये मा विलक्षा न कुरु,

अन्यथाऽस्य लोकस्य समक्ष मे हृदय पक्वालुकवत् द्विधा भविष्यति । हे हंसगमन ! वत्स ! त्व मम क्रोडमागच्छ भूषय च । मम किमियानपि कुक्षिनिवासावकथो न लभ्य ? " एव क्रीडनकैर्मक्ष्यप्रकारैरपि वज्र सुनन्दासमीप मनागपि नाऽऽगच्छत् । मातुरुपकाराणा कोऽपि पुरुषोऽनृणो न स्यादिति जानन्नपि सुधीर्वज्र एव विचारयामास—" यद्यह मातरि कृपा कृत्वा सङ्घमुपेक्षिष्ये तदा ममातिदीर्घतर संसारो भवेत्खलु । इय मे माता धन्याऽल्पकर्मा प्रव्रजिष्यति, अतोऽस्या इदमापातमात्रज दु खमप्युपेक्षणीयम् । " दीर्घदर्शी वज्रदृढाशयो वज्र प्रतिमास्थ इव स्वस्थानान्मनागपि नाचलत् । ततो राजोवाच—" हे सुनन्दे ! त्वमपसर, असावाहूयमानो बालस्त्वा मातरमजानन्निव नाऽऽगच्छत् । ततो राजाऽवसरं प्राप्य धनगिरिं प्रत्युवाच—" हे भगवन् ! अथ त्वमेत बालमाह्वय । " ततोऽसौ रजोहरणमुत्थाप्यैव मिताक्षरमुवाच—" हे अनघ ! यदि तव मते व्यवसाय , यदि च त्व तत्त्वज्ञोऽसि, तदा धर्मध्वज रजोहरण गृहाण " ततो वज्रस्तत्रैवोत्क्षिप्तकरो हस्तिशिशुरिव प्रकणत्पादनूपुरो धनगिर्यभिमुख शीघ्रमधावत् । गत्वा पितु क्रोडमारुह्य लीलाकमलवत्तद्रजोहरणमग्रहीत् । वज्रेण करकमलाभ्यामुद्धृत रजोहरण प्रवचनलक्ष्म्याभ्रमर इव शुशुभे । स शोभमानकुन्दकलिकोपमदशनकान्तिस्मितो रजोहरणादन्यत्र दृष्टिं स्वल्पमपि न ददौ ।

सुनन्दा दिनावसाने कमलिनीव सद्यो ग्लानिं प्राप्ता हस्तविन्यस्तचिबुकेव चिन्तयामास—" मम भ्राता प्रव्रजित , भर्ता च प्राव्राजीत् पुत्रोऽपि प्रव्रजिष्यति । अतोऽहमपि प्रव्रजिष्यामि । सुनन्दा स्वयमेवेति निश्चित्य गृह जगाम । ते मुनयोऽपि वज्रमादाय वसतिं जग्मु । वज्रस्तद्वयस्कोऽपि व्रताभिलाषी स्तन्य नापिबत् ' इत्याचार्यास्त परिव्राज्य पुन साध्वीना समर्पयामासु । सुनन्दाऽप्युद्यद्वैराग्य विशेषेण भृश वैराग्यभृत् तद्गच्छाचार्यपार्श्वे प्राव्राजीत् । धीनिधिर्भगवान् वज्र पदानुसारी पठदार्यामुखादेकादशाप्यङ्गानि पपाठ । वज्र

आर्योपाश्रये यावदष्टवर्षोऽभूत्, ततो हृष्टा महर्षयस्तं स्ववसतिमानैषुः ।

अन्यदा वज्रगुरवोऽवन्तीनगरीं प्रति प्रययुः । मार्गमध्ये मेघोऽखण्डधारं ववर्ष । ते वज्रगुरव आचार्याः सपरिवारा यक्षमण्डपिकोपमेऽस्रवज्जले क्वचित्स्थाने तस्थु'। तदा वज्रस्य पूर्वजन्मसुहृदो जृम्भका देवा' सत्त्वं परीक्षितुं तत्र वणिग्रूपाणि तदुचिताऽऽवासांश्च विचक्रु ।

ते देवा मेघे विरतप्राये तानाचार्यान् लघुवन्दनपुरस्सरं भिक्षार्थं न्यमन्त्रयन्। आचार्यवर्या वृष्टिं निवृत्तामिव ज्ञात्वा भिक्षामानेतुं विनयोज्ज्वलं वज्रमादिशन्, वज्रोऽप्यावश्यकी क्रिया विधाय द्वितीयमुनिना सार्धं मार्गे ईर्याशुद्धिं चिन्तयन् भिक्षार्थं निर्ययौ । वज्रस्त्रसरेणुतुल्यानपि जलबिन्दून् पततो दृष्ट्वाऽप्कायविराधनाद्भीतः शीघ्रं न्यवर्तत। देवास्त्रसरेणुमात्रामपि तां जलवृष्टिं निरुध्य वृष्टिर्नास्तीतिभाषिणो वज्रमुनिं पुनराह्वयन्। वज्रमुनिस्तदनुरोधेन वृष्टौ निवृत्तायामचलद् भक्तपानादिशोभितं च देवावासं ययौ। तेषु देवेषु ससम्भ्रमेषु भक्तपानादि दित्सुषु सत्सु वज्रमुनिर्द्रव्यक्षेत्रकालभावैरुपयोगं ददौ । असम्भवि कूष्माण्डकादिकं द्रव्यं कुतो राद्धम्, यत इदमुज्जयिनीक्षेत्रं स्वभावादेव कठोरमस्ति । प्रथमवर्षास्वस्य द्रव्यस्य कथाऽपि का ?, दातारोऽप्यनिमेषनेत्रा अभूमिस्पृक्पादा इति देवपिण्डोऽयं नियतं वर्ततेऽतोऽयं साधूनां न कल्पते, तस्मादगृहीतपिण्डोऽप्यहं गुरुसमीपं गच्छामि । ” इति हेतोर्वज्रस्वामी देवभिक्षामगृहीत्वैव तदावासान्निववृते । अथ देवा विस्मिता प्रत्यक्षीभूयोचुः—“ हे वज्रस्वामिन् ! वयं जृम्भका देवास्तव पूर्वभवसुहृदः स्म, वयं त्वां द्रष्टुमिहाऽऽगताः स्म । त्वमस्माकमद्यापि मित्रमसि । अथ तुष्टा देवा वज्रस्वामिने विहितमायाया निष्क्रयमिव वैक्रियलब्ध्याख्यां विद्यां ददुः । अन्यदा ज्येष्ठे मासि बहिर्भूमौ विहरन्तं वज्रस्वामिनं देवा नैगमीभूय घृतपूरैर्न्यमन्त्रयन् । वज्रस्तदावासे गत्वा पूर्ववद्देवपिण्डं ज्ञात्वा नाग्रहीत्, यतः स उपयोगज्ञाताऽऽसीत् । अथ पुनस्तुष्टदेवाः पूर्वमित्राय वज्रायाऽऽकाशगामिनीं विद्यां दत्त्वा स्वस्थानं जग्मुः ।

ततो गच्छमध्ये विहरतो वज्रस्य पदानुसारिलब्ध्यैकादशाङ्ग्यपि सुस्थिराऽभूत् । भगवान् मेधाविशिरोमणिर्वज्रो यद्यत्पूर्वगता ध्यधीयमान शुश्राव तत्तदग्रहीत् । यदा स्थविरा वज्र मति पठेति जगदुस्तदा स निद्रालुरिव किंचिद्गुणगुणशब्द चकार । स स्थविराणामगम्भीर स्वशक्तिमप्रकाशयन् यत्किंचिदुद्गिरन्नन्यान् पठत शुश्राव । अन्येद्युर्मध्याह्ने साधवो भिक्षार्थं जग्मु । त आचार्य— भिक्षा अपि बहिर्भूमौ निर्ययु, तदा वज्र एकाकी वसतिरक्षकस्तस्थौ । स साधूनां मण्डलवत् वेष्टिका संनिवेशयामास । स तासां शिष्याणां मध्य आचार्य इवोपविश्य वर्षमिघशब्दो वाचना दातुमारभत । पुनरागच्छन् गुरुरेकादशानामप्यङ्गानां पूर्वगतस्य च वाचना दूरतोऽशृणोत् । वसतिद्वारमागत आचार्यो गहगहशब्द श्रुत्वा साधव किं शीघ्रमागता ' इत्यचिन्तयत् । अस्मदागमन पालयन्तोऽमी महर्षयो भिक्षा गृहीत्वा समागता स्वाध्याय कुर्वन्ति । आचार्याश्च क्षण स्थित्वा विचार्य चाज्ञासिषुर्यत्—" एष शब्दो वाचनां ददतो वज्रबालमुनेरस्ति । असौ पूर्वगतस्यैकादशाङ्ग्या अपि वाचनां यस्माद्देवो ददाति तस्माद्वय विस्मयामहे किमसौ गर्भस्थोऽध्यगीष्ट ' अतोऽय स्थविरैरध्याप्यमानोऽलसायते वा बाल्यात्पाठालस, इति ज्ञात्वा तत्पठनकाले वयमशिक्षयाम । असावस्मदाकर्णनाशङ्की लज्जितो न भवतु ' इति बुद्ध्वा शिष्यगुणैर्हर्षपुलकिताङ्गस्ततोऽपससार । अथाचार्या उच्चै शब्देन नैषेधकी चक्रु । वज्रोऽपि गुरूणां शब्द श्रुत्वाऽऽसनादुदतिष्ठन्, स्खलितगतिर्गुरुर्यावताऽऽयाति तावता वज्र उपधीन् स्वस्वस्थानेऽस्थापयत् । पुनरभ्येत्य गुरोर्दण्डमग्रहीत् पादौ च ममार्ज, तद्रजोवन्दनेन स्व भालमुखैरवगुण्ठयन् आसनस्थस्य गुरो प्रासुकजलेन पादौ प्रक्षालयामास, पादोदक शिरसाऽवन्दत च । आचार्याश्चिन्तयामासु —" असौ बालकोऽपि महात्मा श्रुतसमुद्रपारङ्गतो वज्रास्पदीभवन् रक्षणीय । अस्य बालस्यापि प्रभावमजानन्तोऽन्यसाधवो यथावज्ञां न कुर्युस्तथा वय प्रयतिष्यामहे । " इत्यालोच्याचार्या रात्रौ शिष्येभ्य ऊचुरिदम्—" वयममुक ग्राम यास्याम,

अस्माकं स्थितिस्तत्र द्वित्रदिनानि स्यात् ।" योगप्रतिपन्ना साधवो गुरुं विज्ञापयामासु:—"हे भगवन् ! तदाऽस्माकं वाचनाचार्यः को भविष्यति ?" युस्माक वाचनाचार्यो वज्रो भवितेति गुरुरादिशत् । ते भक्तत्वादविचार्यैव तथा स्वींचक्रुः ।

अथ ते साधव प्रात कृत्य कायोत्सर्गवाचनाग्रहणादिकं कर्तुं वज्रं निषद्यायामुपावेशयन् । वज्रोऽपि गुर्वाज्ञाऽस्तीति निषद्यायामुपविवेश, साधवस्तस्य गुरोरिव विनय चक्रु. । अथ वज्र सर्वेषामपि साधूनामानुपूर्व्या परिस्फुटान् सक्रान्त्या वज्रलेपोपमानालापकान् ददौ । येऽल्पमेधसोऽपि साधवोऽध्येतुमागमस्ते वज्राद्वाचनामादायाऽऽदाय प्रारेभिरे । वज्रोऽतिजडेष्वप्यमोघवाचनो बभूव । ततः सर्वो गच्छस्तदद्भुत नवीन दृष्ट्वा विस्मय ययौ । साधवः पूर्वमधीतान् सुस्फुटानप्यालापान् सवादार्थं वज्रमपृच्छन् । वज्रोऽपि तथैव तानुवाच । महर्षयो गुरुसंनिधावनेकाभिरपि वाचनाभिर्न यावत् पेठुस्तावद्वज्रादेकयैव वाचनया पेठुः । ततो विस्मिता· साधवः परस्परमूचुः, यदि गुरुर्विलम्बते तदा वज्रपार्श्वे श्रुतस्कन्धः शीघ्रं समाप्यते ।" मुनयो गुणैर्गुरुभ्योऽप्यधिकं वज्रं मेनिरे, यत एकगुरुदीक्षिते सुगुणे गणो मोदते ।

आचार्याश्चिन्तयामासुरेतावद्भिर्दिनैर्वज्रोऽस्मत्परिवारस्य ज्ञातगुण· खलु भावी । अथ यद्यदस्यानधीतं तत्तद्वज्रं पाठयामः, यतो निर्मलैर्गुणैः शिष्य उपेत्य पाठनीयता याति । आचार्या एव चिन्तयित्वा कथितदिने समाययुः । तत्पादान्मुनयो वज्रेण सह ववन्दिरे । ततो गुरवोऽपृच्छन् किं युष्माक स्वाध्यायनिर्वाहो भवति ? । साधव ऊचुः—"देवगुरुप्रसादादिति, सर्वे शिष्या आचार्यान् पुनर्वन्दित्वा विज्ञापयामासुः, अस्माकं वाचनाचार्यो भवदादेशेन वज्रोऽभूत् । अस्माभिरज्ञाततद्गुणैर्वज्रश्चिरमवाज्ञायि, इदानीं बालोऽयं भवत्पादा इवास्माक सन्तोषप्रदोऽस्ति । बालोऽपि गुरुगुणयुत एष गच्छस्य गुरुरस्तु । कुन्दकलिकामात्रोऽपि प्रदीपो गृहं प्रकाशयत्येव ' ।

आचार्या ऊचु –" हे तपोधना ! किन्त्वसौ बालकोऽपि विद्यावृद्धोऽस्तीति नावमन्तव्य । वय ग्राममगमाम, युष्मभ्यमय बालोऽप्याचार्यत्वेन समर्पित । अतएव यूयमस्येदृशान् गुणाञ्जानीथ, अन्यथा वाचनाचार्यपदवीमय नार्हति, यतोऽय गुर्वदत्त श्रुत कर्णश्रुत्या जग्राह, हे संयता ! अस्य संक्षेपानुष्ठानरूपोत्सारकल्प कर्तव्य , तत एष आचार्यपदवीयोग्यो भवेत् । " तत उदारधीर्गुरु प्रागप ठित श्रुतमर्थयुत वज्र शीघ्रमध्यापयास । साक्षिमात्रीकृतगुरुर्वज्रो गुरुपाठित श्रुत दर्पण प्रतिबिम्बमिव सर्वमनायासेन जग्राह । तदा वज्रस्तथा श्रुतज्ञोऽभूत् , यथा तस्य गुरोरपि दुर्भेदचिरसंदेहलोष्टमुद्दूरीबभूव । गुरोर्हृदि दृष्टिवादोऽपि यावन्मात्रोऽभूत् तावन्त वज्रो जलचुलुकलीलया जग्राह ।

अन्यदा सपरिच्छदास्त आचार्या ग्रामाद्ग्राम पुरात्पुरं विहरन्तो दशपुरं नाम पुरं जग्मु । तदोज्जयिनीनगर्यां सम्पूर्णदशपूर्वभृदाचार्योऽभूत् । अथ तस्माद्दशपूर्व्यपि ग्राह्याऽस्ति। किन्तु येषामेकादशाङ्गीपाठोऽपि भृश कष्टायते ते शिष्या दशपूर्वग्रहणे कथ शक्नुवन्तु । अथवा वज्रोऽस्त्येवानया चिन्तयाऽलम्, यत स पदानुसारिलब्ध्या इष्टमत्ययोऽस्ति । इति गुरुर्वज्रमादिशत्–" हे वत्स ! त्वमुज्जयिनी गच्छ, तत्र भद्रगुप्तगुरुमुखाद्दशपूर्वी पठ । अल्पमेधस सर्वे, न समा , अतोऽत्र न समर्था सन्ति । अत्राहमपि कुण्ठधीर्भवामि, त्व दश पूर्वाणि पठित्वा मदाज्ञया शीघ्रमत्राऽऽगच्छ । सौम्यशासनदेवतास्तव सन्निहिता सन्तु । हे वत्स ! यथा कूपाज्जलमुपवनसालेषु प्रसरति तथा दशपूर्वी त्वन्मुखान्महर्षिषु प्रसरतु । एव सिंहगिरिर्वज्रमवन्तीं गन्तु स्थविरकल्पतयर्षिद्वयेन सहाऽऽदिशत् । वज्र सिंहगिरेर्गुरोराज्ञा शेषामिव मूर्ध्नाऽऽदाय भद्रगुप्तपादपूतामुज्जयिनीं पुरीं ययौ । वज्र उज्जयिनीं पुरीं प्राप्ते भद्रगुप्ताचार्ये शुभे क्षणे स्वप्न ददर्श– " यत्–मम करात् क्षीरपूर्णपात्रमादाय कश्चिदागन्तुकोऽपिबत् स परमां तृप्तिं प्रापे "–ति । गुरु प्रभाते त स्वप्न शिष्येभ्य उवाच ।

तेऽपि यथाप्रज्ञ विविधमर्थं विचारयामासु । गुरुरुवाच—" यूयं न जानीथ, कोऽप्यतिथिरागमिष्यति सुधीः सोऽर्थसहित सर्वं श्रुतमस्मत्तः ग्रहीष्यति । " वज्रोऽपि नगरीद्वारे रात्रिमतिवाह्य प्रात:काले भद्रगुप्ताचार्यवर्मप्रतिश्रयं ययौ । गुरुर्दूरतो वज्रं दृष्ट्वा समुद्रश्चन्द्रमिव परमया मुदोल्लास परं प्राप । आचार्योऽप्यचिन्तयत्—" अहो मम सौभाग्येनास्य सन्निधिरभूत्, किमेनमहमालिङ्गामि ? किं वाङ्कमारोपयामि ? । " महामुनिर्भद्रगुप्त प्रसिद्धानुरूपा वज्रस्याऽऽकृतिं परिभाव्य वज्रोऽयमिति निश्चिकाय ।

अथ भद्रगुप्तो वन्दनाभिमुख वज्रमुनिं परिषस्वजे, यतो बलीयस्युत्कण्ठा विनयं न प्रतीक्षते । वज्रमुखपद्मे स्वनयने भ्रमरीकुर्वन् भद्रगुप्ताचार्यो वज्रमङ्के समारोप्योवाच—"तव सुखविहार. कच्चित् ? हित वाङ्मनामय कच्चित् ? तव तपो निर्विघ्न कच्चित् ? तव गुरु कुशली कच्चित् ? । अथवा त्व किञ्चित्कार्यमुद्दिश्य विहारक्रमत इहाऽऽगतोऽसि ? हे वज्रमुने ! इत्यस्मान् कथय प्रमोदय च । " वज्र. कृताञ्जलि भेद्रगुप्तर्षिं वन्दित्वा मुखकमलन्यस्तमुखवस्त्रिक उवाच—" हे महर्षयः ! पूज्यपादैर्यद्यत् सुखविहारादिकमपृच्छ्यत तत्तद् देवाना गुरूणा च प्रसादात्तथैवास्ति । हे भगवन् ! अहं गुर्वादेशेन दश पूर्वाणि पठितु त्वामागमम्, तन्मा वाचनाप्रदानेनानुगृहाण । " ततो भद्रगुप्तस्तं दशपूर्वीमपाठयत् । अथ वज्रो गुरोरजनितक्लेशः सन् दशपूर्वीं पपाठ । यत्राध्येतुमारब्धं तत्रैवानुज्ञाऽपि ग्राह्येति सिंहगिरे· सकाशे गन्तुं वज्रश्चिन्तयामास । इति भद्रगुप्तं पृष्ट्वा वज्र पुनरधीतदशपूर्वो गृहीतजलो मेघ इव दशपुर जगाम । तदा सिंहगिरिर्गुरुर्दशपूर्वसमुद्रागस्तिमभ्यागतं वज्रमुनिं पूर्वमन्वज्ञापयत् । वज्रस्य पूर्वानुज्ञाया जृम्भकदेवा दिव्यपुष्पवृष्टिभिरद्भुतं महिमान चक्रु· । ततः सिंहगिर्याचार्यो गण वज्रमुनेरर्पयित्वाऽन्नपानादिकं प्रत्याख्याय काल कृत्वा देवो बभूव । भगवान् वज्रस्वाम्यपि पञ्चशतसङ्ख्यमुनिवृतो भव्यजनकुमुदचन्द्रो भुव व्यहार्षीत् । महामुनिर्वज्रस्वामी विहारेण भुव पुनानो यत्र यत्र जगाम तत्र तत्रैय ख्यातिरभूत्—" अहो अस्य शीलमुज्ज्वलमस्ति,

अहो अस्य श्रुत लोकोत्तरमस्ति, अहो अस्य सौभाग्य निर्मलमस्ति, अहो अस्य लावण्यमद्भुतमस्ति ।"

इतश्च पाटलीपुत्रे महाधनो गुणगणश्रेष्ठो भुवि प्रख्यातो धनो नाम श्रेष्ठी बभूव । तस्य रूपवती रुक्मिणीनाम्नी कन्या रूपान्तर धारिणी रुक्मिणीव बभूव । तस्य श्रेष्ठिनो यानशालाया महामुने श्रीवज्रस्य विमलाशया साध्व्यो न्यवसन् । ता व्रतिन्यो वज्रस्य गुणानकीर्तयन्, यतो गुरूणा गुणकीर्तन स्वाध्यायावश्यकतुल्य भवति । तत्र रुक्मिणी वज्रमुनेस्तां ता सौभाग्यकथा श्रुत्वा वज्रमेव भर्तारमिच्छन्ती सैव प्रत्यज्ञासीत्–" यदि मम भर्ता वज्र स्यात्तदाऽह भोगान् भोक्ष्ये अन्यथा भोगैरलम् ।" पतिं विना भोगै किम् ? ।"
तस्या वरयितारो ये केचिदुपतस्थिरे, सा तान् सर्वान् मुखपरावर्तननाटकेन प्रत्यषेधत् । प्रव्रजितास्तामूचु –" हे रुक्मिणि । यदि त्व वीतराग प्रव्रजित वज्र वरीतुमिच्छसि तदा त्व मुग्धाऽसि ।" रुक्मिण्युवाच–" हे साध्व्य ! यदि वज्र प्रव्रजितस्तदाऽहमपि प्रव्रजिष्यामि, तस्य या गतिर्ममापि सैव गतिर्भविष्यति ।"

इतश्च धर्मदेशनाजलजलधरो भगवान् वज्रमुनि पाटलीपुत्रनगरे विहारेण ययौ । तदा पाटलीपुत्रराज आयान्त वज्रमुनिं श्रुत्वा तत्काल सपरिवारो महीयस्यर्द्ध्याऽभिययौ । राजैतश्चेतश्च वज्रर्षेर्वृन्दीभूतास्तप श्रिया शोभमानान् महामुनीनागच्छतोऽपश्यत् । तान् दृष्ट्वा च व्यचिन्तयत्–" सर्वेऽमी कान्तिमन्त , सर्वेऽपि सुन्दराकारा , सर्वेऽपि विकसन्मुखा , सर्वेऽपि प्रियवदा , सर्वेऽपि करुणारस सागराः सर्वेऽपि समताशालिन , सर्वेऽपि निर्ममाः, तदेतेषु को नाम वज्रस्वामी इत्यह न जानामि चेत्तर्हि किं करोमि ? स एव भगवान् गच्छस्य नायकत्वात् प्रथमतो वन्दनीय ।" राजा क्षण स्थित्वा महर्षीन् पप्रच्छ–" हे महर्षय ! भवन्त कथयन्तु किं वज्रस्वाम्य यम् ? वा किमेष ? किमसौ वा विराजते ? " मुनय ऊचु –" हे राजन् ! वय तु वज्रस्य शिष्याः स्म , त्वमस्मासु त मा चिन्तय ?

क सूर्यः क च खद्योता', एवं सर्वेषु मुनिसमाजेषु पृच्छन् राजा गणस्य पश्चात् स्थित मोहगिरिवज्रं वज्रं ददर्श । अथ राजा किरीट-रत्नकिरणजालैस्तत्पादौ स्नपयन्निव वज्राचार्यभट्टारक ववन्दे । अथ वज्राचार्य. सपरिवारो वृक्षच्छायामतिश्रयमाश्रित्योद्याने समवससार । राजाऽपि निषद्यायामुपविष्टस्य वज्रमुनेश्चरणयुगलं सुगन्धिना यक्षकर्दमेनाचर्चयत् । ततो भगवान् वज्रस्वामी सुधामाधुरीमधरयन्त्या वाचा मोहध्वान्तध्वंसैकदीपिका देशनामकरोत् । क्षीरास्रवलब्धिमत. श्रीवज्रस्वामिनस्तया धर्मदेशनया राजाऽपहृतचित्तो देशनाऽवसाने वज्रमुनिं नत्वा स्वगृह गत्वा राज्ञीरकथयत्–" हे सुभ्रुव. ! अहमद्य बाह्योद्याने स्थितं धर्मदेशनाक्षीरसमुद्रं वज्रस्वामिनमवन्दिषि । तं वन्दित्वा तस्य धर्मं श्रुत्वा च मम शरीर नयनयुगल श्रवणयुग्म च कृतार्थता प्रापुः । हे सुलोचनाः ! इदमेव दिन सुदिनं मन्ये, यस्मिन् वज्रमुनेर्ज्ञान-सूर्यस्य दर्शनमभूत् । एतावताऽप्यहं धन्योऽस्मि, यन्मया वज्रमुनिर्दृष्ट , किं पुनस्तन्मुखादार्हतं धर्ममश्रौषम् ?, हे राज्ञ्य ! तद्यूयमपि वज्रर्षि द्रष्टुमर्हथ शीघ्रं गच्छत, यत ऋषयो वायुवदेकत्र न तिष्ठन्ति । " राज्ञ्य ऊचुः–वयं स्वयमपि त वन्दितुमिच्छाम', यदत्र तवाऽऽज्ञाभूत् तत्तृषितैर्नदी प्राप्ता । " ततो राजाज्ञया राज्ञ्यो याप्ययानाधिरूढा वज्रस्वामिपादालङ्कृत बाह्योद्यानवरं जग्मु ।

रुक्मिण्यपि जनोक्तिभिर्वज्रस्वामिनमागत श्रुत्वा तमेवाऽऽत्मान योगिनीव चिन्तयन्ती तस्थौ । द्वितीयदिने रुक्मिणी स्वपितर-मुवाच–" हे पित ! यमहं सदा वुवूर्षामि स वज्रस्वामी समागतोऽत्र वर्तते । हे तात ! तन्मा वज्रकुमाराय देहि, अन्यथा मम मरण शरणम् । इय मे वाणी शिलालेखेव निश्चलाऽस्ति । यदाभिजात्यसहचरीं लज्जा विहायैव वदामि, तत्राय हेतुर्वज्रोऽय मम पुण्यैरागत । प्रायेणाय नेह स्थास्नु', यद्यद्यैव गच्छति किं ज्ञायते ? कदा पुनरुड्डीनपक्षिवदागच्छति ? हे पितस्तस्मादलं विलम्बेन वज्राय शीघ्र देहि चिरकौमारदीना मा पश्यन् किं न परितप्यसे ? । धनोऽप्येवमाग्रहात् सद्यो विवाहयोग्यवस्त्रालङ्कारभूषिता

कृत्वा तां रुक्मिणीं वज्रसमीपमनैषीत्। वरयितुर्यथा प्रलोभनं स्यादिति जातधीर्धनः कन्यया सहानेकशः कोटीर्धनानामनैषीत्। तद्दिनाद्द्वितदिने वज्रे देशनां कुर्वति सति भक्तिमान् नागरलोकः परस्परमिदमुवाच—"अहो वज्रस्य कीदृशं सुस्वरत्वं यदीयदेशनां श्रुत्वाऽऽनन्दमग्नानां जनानां मोक्षावस्थेव जायते। सर्वगुणरत्नसागरस्य श्रीवज्रस्वामिनो यदि गुणानुरूपं रूपं चेद् भवेत्तर्हि किमुच्येत? यत नगरप्रवेशे पुरक्षोभशङ्कयाऽऽत्मनो रूपं स्वशक्त्या वज्रर्षिणा संक्षिप्तमेव कृतमासीत्।" भगवान् वज्रस्वामी च विपुलेन ज्ञानबलेन तेषां मनोगतं भावं ज्ञात्वा द्वितीयदिनेऽनेकलब्धिना लक्ष्म्यासनतुल्यं सहस्रदलकमलं व्यकरोत्। स्वाभाविकमद्भुतं रूपं कृत्वा तत्कमलोपरि राजहंस इवोपाविशच्च। जनो जितदेवकुमारकं वज्रस्वामिरूपं दृष्ट्वा संगीताभ्यासं कुर्वन्निव शिरांसि कम्पयामास। उवाच—"वज्रस्वामिनः स्वाभाविकं रूपमदो वर्तते, गुणानां रूपस्य चात्र तुल्यः समागमोऽजनि। अहं लोकस्य प्रार्थनीयो मा भूवमिति शङ्कया ह्यस्तनं रूपं पुनः स्वशक्त्या चकार खलु। विस्मयस्मेरमना राजाऽप्येवमुवाच—"वज्रमुनिः खलु यथेष्टरूपकरणलब्धिर्वर्तते।" वज्रस्वामिनस्तद्रूपं पश्यन् धनश्रेष्ठ्यपि तत्त्वयवरे साग्रहां स्वपुत्रीं वर्णयामास। स्वार्थं प्रार्थयितुकामस्य धनस्य हृदि अत्युच्चाने जलमिव वज्रस्वामिदेशनार्थो न तस्थौ। धनश्रेष्ठी देशनान्ते कृताञ्जलिर्वज्रमुवाच—"हे मानद! मयि प्रसादं कृत्वेमां मत्पुत्रीं परिणय। क्व भवान् देवस्वरूपः केयं मानुषकोटिका मत्कन्या, तथापि त्वमेनां स्वीकुरु। यतो महत्सु जनेष्वभ्यर्थना वृथा न भवति। हे वज्रस्वामिन्! विवाहानन्तरं हस्तमोचनावसरेऽसंख्याता द्रव्यकोटीस्तुभ्यमहं दास्याम्यत इदं भवतु। दयापरो वज्रस्वामी तमज्ञं विज्ञायोवाच—"तव द्रव्यकोटीभिरलम्, तव कन्यया चालम्, यतः स्त्रियो हि विषयास्ते पुनार्विषतुल्या, आपातमात्रमधुरा, परिणामे परमदारुणा भवन्ति। विषया विचार्यमाणा विषादपि विशिष्टा भवन्ति। विषं तु भुक्तवतोऽनर्थाय, विषयास्तु स्मृताः सन्तोऽपि प्राणिनां जन्मान्तरेऽ-

ऽप्यनर्थाय जायते । अह परिणामदु खदान् विषयान् ज्ञात्वाऽमून् कथ स्वीकरोमि ? यतो निर्धनोऽपि 'अय चौर' इति ज्ञात्वा त त्यजत्येव यदि महानुभावा त्वत्कन्या मय्यनुरागिण्यस्ति, तर्हि मया स्वीकृता प्रव्रज्यामासावपि गृह्णातु । कुलीनाऽसौ यदि मनसाऽपि मामेवैच्छत्, तदा परलोककल्याणेच्छयैव कर्तुमुचितम् । अथवा ममाज्ञयाऽपि स्वविवेकपूर्वक मोक्षार्पणलग्निका प्रव्रज्यामेषा गृह्णातु । त्वत्कन्या विभीतकवृक्षच्छायामिवानर्थप्रदायिनीं विषयाऽऽसक्तिं मा कार्षीत् । तस्या हितमिदं वदामि " । तदा पूर्वोक्ताभिर्भगवतो वज्रस्वामिन· कुशलोक्तिभि· प्रतिबुद्धाऽल्पकर्मा रुक्मिणी प्रवव्राज । " ' अयमेव धर्म· श्रेयान्, यत्रेदृशी निर्लोभता " । एवं विचार्य बहवो जनाः प्रतिबोधं प्रापु· । तया रुक्मिण्या श्रीवज्रस्वामिपार्श्वात् प्रव्रज्याऽऽग्राहि । मुनिवरोऽपि तस्मात्स्थानाद्विजहार ।

अन्यदा भगवत· सङ्घस्योपचिकीर्षुर्जन्मससिद्धपदानुसारिलब्धिर्भगवान् वज्रस्वामी महापरिज्ञाध्ययनादाचाराङ्गान्तरस्थामाकाशगामिनीं विद्यामुद्धृत्य कथयामास । अनया विद्यया मम जम्बूद्वीपादामानुषोत्तरं भ्रमणे शक्तिरस्ति । ममेय विद्या रक्षणीया । कस्यचिन्न दातव्या । यतोऽतः परमन्ये जना अल्पर्द्धयोऽल्पसत्त्वाश्च भविष्यन्ति ।

अन्यदा महामुनि· श्रीवज्रस्वामी पूर्वदिग्भागात्सूर्यो मकरसङ्क्रान्तौ दक्षिणत इवोत्तरदिशं जगाम । तदा तत्रातिभीषणं दुर्भिक्ष प्रावर्त्तत । जनो भोजनेन श्रद्धया च विकलोऽभूत् । गृहिणामन्नाऽभावादल्पभोजनकरणेन यतीनामिव नित्यमूनोदरता बभूव । धनिका अपि गृहस्थाः सत्रशाला शिश्रियु । पृथ्वी सर्वत्रैव निरन्तरं रलरोलाकुला बभूव । दीनाश्वत्वरे विक्रीयमाणानि दधिभाण्डानि स्फोटं स्फोटं तदधीनि कुक्कुरा इवालिहन् । पुना रङ्का अस्थिचर्मावशेषाङ्गा सुस्पष्टस्नायुमण्डला भयङ्कराः प्रेता इव सर्वत्र सञ्चेरुः । अनगारेषु भिक्षार्थमागतेषु श्रावका अप्यन्नतृष्णया भिक्षादोषानदर्शयन् । शून्येषु परितो निर्धूमगृहेषु ग्रामेषु पादसञ्चारा मार्गा अपि सञ्चाराऽयोग्या

बभूवु । ततो दुष्कालपीडित सर्वं सङ्घो दीनो वज्राचार्यं विज्ञापयामास “ भगवन्! त्वमस्मानस्माद्दुःखात्कथमप्युद्धारय, सङ्घप्रयोजने
विद्योपयोगोऽपि न दुष्यति ” । ततो भगवान् वज्रस्वामी गरीयस्या विद्याशक्त्या चक्रभृच्चर्मरत्नवद्विपुलं पट विचकार । तत्र च तेन निर्दिष्ट
सर्वं सङ्घो नौकायां सार्थवाह इवाऽधिरुरोह ” । तथा कृते सति स पटो भगवता वज्रमुनिना प्रयुक्तया विद्याशक्त्या पवनोत्क्षिप्ततूलव
दाकाशे समुड्डिड्ये । तदा दत्तनामा वज्रमहामुने शय्यातर सहचारिग्रहणार्थं गतस्तत्राऽऽययौ । स सङ्घेन सहित स्वर्गयायिन वज्र
स्वामिन दृष्ट्वा केशाञ्छीघ्रमुत्पाट्योवाच– ‘ हे भगवन्! अहं पुरा ते शय्यातरोऽभवम्, अधुना साधर्मिकोऽप्यस्मि, मां किं न निस्ता
रयसि ’ । ” ततो वज्रस्वामी शय्यातरस्योपालम्भगर्भितवच श्रुत्वा लूनकेश त दृष्ट्वा– “ ये साधर्मिकवात्सल्ये स्वाध्याये चरणेऽपि वा
तीर्थप्रभावनायां चोद्युक्तास्तान् मुनिस्तारयेत् ” इत्यागमार्थं स्मृत्वा सोऽपि पटेऽध्यरोपि । विद्यापटोपविष्टा गच्छन्तस्ते सर्वे सपर्व
तनदीपुरां पृथ्वीं करामलकवद् ददृशु । आकाशे मार्गस्थव्यन्तरदेवैर्भक्त्या पूज्यमान, भक्तैर्ज्योतिषिकदेवै प्रदीयमानार्घ्य शक्ति–
सम्पन्नमरुत्कृतैर्विद्याधरैर्वर्ण्यमानोऽनुकूलेन पवनेन मुहुर्देवाऽऽलिङ्ग्यमानो महीस्पृशा पटच्छायादर्शिताभ्रच्छायासौख्य आकाशस्थोऽप्यनेकशो
मार्गचैत्यानि वन्दमान, पटस्थोऽपि पटस्थेभ्यो धर्मदेशनां कुर्वाणो वज्रर्षिर्महापुरीं नाम पुरीं प्राप । धनकणयुतायां तस्यां नगर्यां
सदा सुभिक्षमासीत् ।

तत्र प्रायेण श्रावको लोक आसीत्, राजा तु बुद्धभक्त आसीत् । तस्यां पुरि जैना बौद्धाश्च परस्परं स्पर्धमाना देवपूजादि चक्रु । जैनास्तु बौद्धाञ्जेतु, जैनास्तत्र पुरे यत्र यत् पुष्पादिपूजोपकरण ददृशुस्तत्तदधिकमूल्य दत्त्वाऽक्रीणन् । तेन बौद्धाः पुष्पादि प्राप्तु नाशकन् । ततश्च बुद्धमन्दिरेषु पूजाऽल्पीयसी बभूव । ततो लज्जितास्ते बुद्धभक्ता राजान विज्ञप्य जैनानां सर्वं पुष्पादि निवारयामासुः ।

ततोऽर्हद्भक्ताः सर्वेषु पुष्पापणेषु बहुमूल्यदानेनापि पुष्पवृन्तान्यपि न प्रापु॰। तत॰ पर्युषणापर्वण्युपस्थिते रुदन्तो दीनास्या आर्हता वज्रर्षिमुपतस्थुः। ते श्रावका नेत्रजलैर्महीतल सिञ्चन्तो वज्रस्वामिन नत्वा खेदगद्गदया वाण्या विज्ञपयाञ्चक्रु –“ हे भगवन्! अर्हच्चैत्येषु प्रतिदिन पूजादि द्रष्टुमशक्तै बौद्धैर्दुरात्मभिर्मूतैरिव पराभूता॰ स्मः, बौद्धलोकेन विज्ञप्तो बौद्धो राजाऽस्माक पुष्पाणि ददत सर्वान् माला-कारान्न्यवारयत्। हे नाथ! वयमगस्तिपुष्पाण्यपि न प्राप्नुम॰। द्रव्यवन्तोऽपि वय किं कुर्मः ?, राजाऽऽज्ञामुल्लङ्घयितु क शक्नोति। हहा जिनबिम्बानि ग्रामयक्षवत् तुलसीबर्बरीपूजापात्रता गच्छन्ति, अस्माकं जीवितेनालम्। एते छलेनार्हत्सु नारोपयन्त्विति शङ्कितै-र्बौद्धैरस्माक केशवासार्थमपि पुष्प निषिद्धम्। किं चाङ्गुलीरनिश गणयतामस्माक दिनश्रेष्ठ पर्युषणापर्वदिनमागच्छत्। अस्मिन् पर्वण्या-गतेऽपि वय यतिवज्जिनाना पूजां पुष्पसम्पत्त्यभावाद्भावेन करिष्याम। हे स्वामिन्! त्वयि सत्यपि दुर्बुद्धिभिर्बौद्धै पराभूय पराभूय जीवन्मृता इव कृता॰ स्मः। हे भगवन्! अभिभूतस्यास्य जिनप्रवचनस्य प्रभावनां कृत्वाऽस्मान् सञ्जीवयितुमर्हसि।” ततो भगवान् वज्रस्वामी–“ हे श्राद्धा यूय समाश्वसित, युष्माक सुतेजसेऽह यतिष्ये।” इत्युक्त्वा गरुड इवाऽऽकाश उत्पपात।

अथ स्वामी निमेषमात्रेण माहेश्वरीं पुरीं जगाम। एकस्मिन् विस्मयकारक उपवनेऽवातारीत्। तदुद्यान हुताशननाम्नो देवस्याऽऽ-सीत्। तत्र य उपवनपालः स धनगिरे॰ श्रेष्ठिनो मित्रमासीत्। स तडिताख्य आरामिक प्रभातेऽकस्माद् मेघवृष्टिवदागतं श्रीवज्रस्वा-मिन दृष्ट्वा हर्षेण सद्योऽवादीत्–“ तिथिषु धन्येय तिथिर्यस्या त्वं ममातिथिरभूः। अहमधुना स्व धन्य मन्ये, यतस्त्वयाऽह स्मृतोऽस्मि। त्वयाऽह भाग्येन सुस्वप्नवच्चिरात्त दूरीकृतः, यस्मात्त्व ममातिथिरागाः। तव किमातिथ्य करोमि ?।” ततो वज्रस्वाम्युवाच–“ हे उद्यान-पालक! मम पुष्पैः प्रयोजनमस्ति ’ तानि त्व दातुमर्हसि। ततो मालाकार उवाच–“ भगवन्! पुष्पग्रहणेन मामनुगृहाण, यतोऽत्र

विंशति पुष्पलक्षाणाम् प्रतिदिन भवति। भगवानादिशत्–" हे उद्यानरक्षक ! तर्हि पुष्पाणि प्रगुणीकुरु, यावदितो गत्वाऽऽगच्छाम ।"
एवमुक्त्वा वायुरिवोत्पत्य गगनेन वज्रमुनि क्षुद्रहिमवद्गिरिं ययौ । सरिद्वनगजकिन्नरगह्वरशिखरादिशोभित त हिमगिरिं स व्योमस्थोऽन्य
सूर्य इवापश्यत् । विद्याधरकुमारैर्वन्द्यमानचरण स सिद्धायतनस्था शाश्वतार्हत्प्रतिमा ववन्दे । अथ स आकाशमार्गेण श्रीदेवीमन्दिर
मनोहरं कमलाकर देवतागारमगायद्देवीजन, पद्मह्रद जगाम । तदा देवपूजार्थमेक कमलमवचित्य देवतामन्दिरं गच्छन्त्या श्रीदेव्या
वज्रर्षिरदृश्यत । श्रीदेवी दृष्टमात्र त मुनिवरं रत्नमुकुटप्रभाजलैस्तच्चरणौ स्नपयन्तीव ववन्दे । धर्मलाभाशिष दत्त्वोपविष्ट त मुनिं
श्रीदेवी बद्धाञ्जलिरुवाच–" आज्ञापय किं करोमि "। भगवान् वज्र उवाच–" तवेदमेवाऽऽदिष्टम् ! हे लक्ष्मि ! करकमलस्थमिद
कमल ममार्प्यताम् ।" स्वामिन् ! किमेतदादिष्टम् ! इन्द्रोपवनजानि पुष्पाण्यप्यानेतु शक्ताऽस्मि " इत्युक्त्वा सा तस्मै पद्ममार्पयत् ।
लक्ष्म्या वन्दितो वज्रमुनि शीघ्र तेनैव पथा हुताशनवन जगाम । अथ विद्याशक्त्या विविधर्द्धिभि शोभमान पालकस्यानुजन्मेव
विमान विचकार । तन्मध्ये श्रीदेव्यर्पितकमल स्थापयामास । तस्य पार्श्वे विंशति पुष्पलक्षाणि निदधौ । तदा वज्रस्वामी जृम्भक-
देवानस्मरत्–" ते इन्द्रमिव वज्रमुनिं तत्क्षणादुपतस्थिरे । धनगिरिसुतो मुनिश्छत्रस्येवाम्बुजस्याध उपविश्याऽऽकाशगमनाय विमा
नवरमादिदेश । तस्मिन् विमाने चलिते जृम्भका देवा अपि विमानारूढा गीतवाद्यादिपूर्वक चेलु । विमानस्थैर्वैमानिकैर्विमानस्थो वज्र
परिवेष्टितो भूत्वा बौद्धदूषिता महापुरीं नाम पुरीं प्राप । तत्पुरीवास्तव्या बौद्धा आकाशे विमानानि दृष्ट्वोत्फुल्लविलुमुच्चमता इषोत्पश्या
एवमूचु – ' अहो देवा सम्भाव बौद्धदर्शन दृष्ट्वा बुद्ध पूजयितुमागच्छन्ति, श्रीबुद्धाय नमोनमोऽस्तु ।

एव वदता तेषां विमानैर्गन्धर्वनगरशोभां दर्शयन् वज्रमुनिरर्हन्मन्दिर ययौ । मषीधौतमुखैरिव बौद्धै पुनरूचे–अहो अर्हद्दर्शन

## त्रयोदश सर्ग ।

### आर्यरक्षितवृत्तान्तः ।

इतश्च दशपुरनामपुरे ओदायणनामा राजाऽजनि । सोमदेवनामा विप्रोऽभूत् । तस्य स्त्री रुद्रसोमानाम्नी परमार्हती धर्मद्रुमबीजै र्दयादिभिर्गुणैरलङ्कृता बभूव । तयोरार्यरक्षित फल्गुरक्षितनामानौ नीतिमन्तौ द्वौ पुत्रावभूताम् । तत्राऽऽर्यरक्षितो मौञ्जीब धनादप्यनन्तरं पितुरेव सकाशे स यद्विवेद तत् पपाठ । ततोऽधिकाधिकमध्येतुकाम पितरावनुज्ञाप्यार्यरक्षित पाटलीपुत्रनगरं ययो । विद्विष्टधी स तत्राङ्गानि चतुरो वेदान् मीमासान्यायविस्तरं पुराण धर्मशास्त्र चापाठीत् । चतुर्दशापि विद्यास्थानानि स्वनामवत् कण्ठस्थानि कृत्वा पुन र्दशपुरं नाम निज पुरं समाययौ । चतुर्वेदोऽय पूज्य समागत इति राज्ञा हस्तिस्कन्धेऽधिरोह्य नगरे प्रावेश्यत । लोका अपि नानो पायनपाणय तमभ्ययु, यतो यो राजभि पूज्यते स कस्य पूज्यो न भवति ? । आर्यरक्षित उपदामिव कुटुम्बे नवमानन्द प्रयच्छन् गृहस्य बाह्यशालाया न्यवात्सीत् । त ब्रह्मचर्यधनव त राज्ञः पूज्यमान दृष्ट्वा तद्बान्धव स्वगोत्र पवित्रममन्यन्त । तद्गृहद्वारे स्वजनैश्चिरेणाया आगमिष्यन्त्या लक्ष्म्या लीलादोलातुल्य सुन्दरं तोरण बबन्धे । तदीयगृहे स्त्रियस्तद्गुणाख्यानप्रशस्तिवर्णसमान् कल्याणकारकान् स्वस्ति काल्लिँलिखु । बाह्यशालास्थितोऽप्यार्यरक्षितोऽल्पैरेव दिनैर्बहुतरैरागच्छद्भिरुपायनैर्लक्ष्मीवानभूत् ।

अन्यदा विमलमतिरार्यरक्षितश्चिन्तयामास–" अहो ममेदश प्रमादो यदहमद्यापि मातरं नाभिवादये । स्त्रीणां पुत्रा बाह्या प्राणा भवन्ति, यत पुत्रस्य प्रवासज दुःख स्त्रीणां दु सह भवति । मत्प्रवासेन मन्माता कथ भविष्यति ? या निद्रायामपि नित्य मम मामाक्षरवाग्मिनी भवति, अहो मन्मातुरिदमेव धीरत्व विचित्र यन्मां सा मद्धितकाम्यया देशान्तरे प्रैषीत् । तस्माद्गुणोपार्जनानिमित्त

स्वचित्त दर्शयन्नुत्कण्ठाजलनर्दीं स्वमातरमहमानन्दयामि ।" इति ध्यात्वाऽऽर्यरक्षितः सद्यो दिव्ये वस्त्रे परिधाय कश्मीरजाङ्गरागेण विलिप्तदेहकान्तिः सुगन्धिपुष्पमाल्यगर्भिताऽऽबद्धकेश कण्ठहस्तपादविन्यस्तस्वर्णालङ्कारः कर्पूरखण्डयुतताम्बूलसुन्दरमुख· श्वेतच्छत्र-शोभमानशीर्षः सन् स्वगृह जगाम । विनयी स प्रथम गलावलम्बिकाञ्चनमेखलालिङ्गितभूतलः सन् मातृचरणौ ववन्दे । "हे पुत्र ! दीर्घायुरक्षयोऽपि त्व भूयाः, तव स्वागतमस्तु" इत्युक्त्वा सा प्रातिवेश्मिकीवदन्यन्नोवाच । स मातु· प्रेमभरोचितसंलापरूपं प्रसादं पूर्ववदपश्यन्नुवाच–" अहमधीतसर्वविद्यस्त्वच्चरणान् द्रष्टुमागमम्, भक्तिमर्यादासागरं मा त्वं किं नालपसि ? । राजा राज-गुरोरिव मम पूजा करोति, पुत्रस्य मे महिमान दृष्ट्वा त्वं किं न हृष्यसि ? । ततो रुद्रसोमा तन्माता जगाद–हे पुत्र ! तव विद्योपार्जनेन किम् ? यद्धिंसोपदेशक नरकप्रदमेतच्छास्त्रं त्वयाऽधीतम् । नरकपाताभिमुखं कुक्षिसम्भवं त्वा दृष्ट्वा कथं प्रसीदामि ? अपि तु कर्दमे गौरिव खेदे मग्ना विषीदामि । यदि त्व मयि भक्तोऽसि, यदि त्व मां हिता मन्यसे, तर्हि स्वर्गापवर्गयोः कारणं दृष्टिवाद पठ ।" इत्यार्य-रक्षितो व्यचिन्तयत्–मयेद किमधीतम् ?, यन्मम मातुः प्रमोदाय न जायते । तदुद्भवेन धनेनापि किम् ?" एवं विचार्याऽऽर्यधीरार्यर-क्षितो मातरमवोचत्–" हे मातरहं दृष्टिवाद पठिष्यामि, तद् गुरुं त्वं कथय ।" रुद्रसोमाऽवदत्–" हे वत्स ! त्वं श्रमणोपासको भव, दृष्टिवादस्य गुरव श्रमणा एव सन्ति, अन्ये न सन्ति ।" दृष्टिवादो हि दर्शनविचार इति सुन्दरमस्य नामापि हृद्यार्यरक्षितः श्रद्दधौ । उवाच च–" मातुरादेशः प्रमाणम्" ते गुरवः क दर्शनीयाः ? यथाऽहं तत्पार्श्वे दृष्टिवाद पठामि, रुद्रसोमाऽपि पुत्रविनयोच्छ्वसिता सती प्रसन्ना स्वाञ्चलं भ्रमयन्ती तमुवाच–" हे पुत्र ! त्वया पुत्रेणाहमधुना न लज्जे यन्मदाज्ञा कर्तुं मन्मनोरथमकार्षीः । हे आर्यरक्षित ! तोसलिपुत्रनामान आचार्या इतो ममैवेक्षुवाटे स्वीकृताऽऽवासाः सन्ति, तच्चरणकमलोपासनहंसो भव । हे पुत्र ! ते त्वा दृष्टिवादं पाठयि

ध्यति।" आर्यरक्षित एवं प्राव करिष्यामीत्युक्त्वा दृष्टिवादनाम स्मरन् रात्रावपि न शिश्ये। प्रातःकाले मातरं पृष्ट्वाऽऽर्यरक्षिता गस्तिर्दृष्टिवादसमुद्रं गण्डूषलीलया प्रज्ञया पातुं स्वगृहाच्चचाल।

इत आर्यरक्षितस्य पितृमित्रं महाद्विजः पुरसमीपे ग्रामे पितेवात्यन्तवत्सल आसीत्। स दध्यौ-"मया च आर्यरक्षितो न व्यलोकि, तदद्याप्यायुष्मन्तं तं मित्रपुत्रं पश्यामि।" इति विमृश्य स ब्राह्मणः सकलान् नवेक्षुदण्डान् तत्खण्डमेकं च गृहीत्वाऽऽर्यरक्षित गृहं ययौ। एष श्रेष्ठः सोमदेवपुत्रं गृहान्निर्गच्छन्तं ददर्श। परं च विभातत्वात् नालक्षयत्। स आर्यरक्षितमुच्चैः पप्रच्छ-"को नाम त्वमसि?।" तत आर्यरक्षित उवाच-"अहमेष आर्यरक्षितनामाऽस्मि।" द्विज उवाच-"हे भ्रातृपुत्र! ह्यस्तने दिने कुटुम्बकृत्य करणममावान्मया त्वं न दृष्टोऽसि। एकेनापि व्यतीतेन दिनेनाहं दिनशतं व्यतीतं मन्ये, यत्र हृदयकुमुदचन्द्रं त्वां नाहमपश्यम्।" इति स ब्राह्मणः आर्यरक्षितं प्रेम्णाऽऽलिङ्ग्योवाच-"हे वत्स! मया त्वदर्थमेते इक्षव आनीयन्त।" सोमपुत्रः उवाच-"हे तात! इक्षून् मन्मातुस्त्वं देयाः, यतः सम्प्रत्यहं शरीरचिन्तार्थं बाह्यभूमिं गच्छामि। त्वं मम मातरं प्रतीदं कथयेर्यदार्यरक्षितो मामिक्षुहस्तम-पश्यदधुना।" आर्यरक्षितेनेत्युक्तो ब्राह्मणस्तथाऽकरोत्। चतुराऽऽर्यरक्षितमातैवं दध्यौ-"मम पुत्रस्येदं श्रेष्ठतरं शकुनमभूत्, अतः सुधीः सोऽवश्यं नव पूर्वाणि खण्डं च ग्रहीष्यति।" सोमपुत्रो मार्गे गच्छन्निति दध्यौ-अहं दृष्टिवादस्य नव पूर्वाण्यध्ययनानि वा दशमं खण्डं च पठिष्यामि।" स्थिरबुद्धिरार्यरक्षित इक्षुगृहद्वारे गत्वा व्यचारयत्-"अहमपरिज्ञातोऽन्तः कथं प्रविशामि? यतो राज्ञामिव गुरूणां सन्निधाने परिचितोऽपि यतस्ततो नोपगच्छेत्, अहं तु परिचितोऽपि नास्मि।" तस्मादहमत्रैव क्षणं स्थित्वा मातर्वन्दनार्थमागतश्रावकैः सह वसतिमध्ये प्रविशामि।" इत्यार्यरक्षितो द्वारेऽपि द्वारपाल इव तस्थौ। यतो विदुषां रभसारम्भे विघ्ने

कोऽग्लायते । स साधूना मालव–कौशिकीप्रभृतिरागवत्ता स्वाध्यायेनापि मृग इव लीनता प्राप ।

तत· प्रभाते ढड्डरनामा श्रमणोपासको हर्षेण विकसितनेत्रो महर्षीन् वन्दितु तत्राऽऽगात् । स नैषेधिकीं त्रिः कुर्वन् प्रतिश्रय प्राविशत् । अथ ऐर्य्यापथिकीमुच्चैस्तरस्वरं प्रत्यक्रामत्, ततः स आचार्यान् साधूंश्च यथाविधि वन्दित्वाऽग्र आसन प्रतिलिख्यो-पाविशत् । अथ धीमानार्यरक्षितस्तेन सह प्रतिश्रय प्रविश्य तस्माच्छ्रुतं वन्दनैर्यापथिक्यादि धारयामास । आर्यरक्षितस्तद्दर्शितविधिं पठनपुरस्सरमभिनयन्नाचार्यपादान् साधूंश्च ववन्दे । आर्यरक्षितो ढड्डरश्रावक तु नावन्दत । सुधीरपि स विनाऽऽम्नाय कियद्विज्ञातुं शक्नुयात् ? । आचार्या अवन्दितढड्डरं निषण्ण सोमपुत्र व्यज्ञासिषुर्यत् कोऽपि प्रायो नवीन श्रावकोऽस्ति । शरज्जलनिर्मलाशया आचार्या धर्मलाभाशिष दत्त्वा त पप्रच्छु–" तव कुतो धर्मागमः । " रुद्रसोमानन्दनो यथातथमेवोवाच–अस्माच्छ्रमणोपासकात् प्राप्तधर्मो-ऽस्मि । अन्यस्मान्न । " साधवोऽप्येवमूचुः–हे भगवन् ! रुद्रसोमायाः पुत्रोऽयमार्यरक्षितो वेदाब्धिपारगो विद्वानस्ति । राज्ञाऽयं चतुर्दश-विद्यास्थानोपाध्यायो हस्तिस्कन्धाधिरूढोऽस्मिन्नगरे प्रवेशितोऽस्ति । " आद्यगुणस्थानस्थितानामग्रेसरोऽपि श्रावकाऽऽचार पालयतीत्या-श्चर्यम् । आर्यरक्षित उवाच–" अह सम्प्रति श्रावकोऽस्मि, शरीरिणा भावपरिणाम· किं नवो न भवेत् ? । तत स कृताञ्जलिराचा-र्यान् विज्ञापयामास–" हे भगवन् । त्व दृष्टिवादाध्यापनेन मामनुगृहाण । अह विवेकशून्यो दुरात्मोन्मत्त इव हिंसोपदेशक नरकावह सर्वमपाठिषम् । " आचार्या अपि त शान्तं योग्य ज्ञात्वैवमूचु–" यदि त्व दृष्टिवाद पिपठिषसि तर्हि परिव्रज, किं च हे ब्राह्मण ! प्रव्रज्याया गृहीताया सत्यामन्यदपि क्रमेण दृष्टिवाद च त्वामहमध्यापयिष्यामि । " सोऽप्युवाच–" हे भगवन् ! तर्हीदानीमपि परि-व्रज्या मे देहि यतो ममैषा न दुष्करा, किन्तु मन्मनोरथकामधुगस्ति । किन्तु स्वशिशौ प्रसाद कुर्वद्भिर्विहारक्रमज कष्ट स्वीकृत्यान्यत्र

गम्यताम्। यतोऽत्र स्थितं मां राजा पुरजनोऽपि गाढानुरागेण प्रव्रज्यां त्याजयेदपि।" तदनुरोधेनाचार्या अपि सपरिवारा अन्यत्र विजह्रु। सोऽप्यत्र स्थितो दासवच्चचाल। तदा श्रीवर्धमानस्य तीर्थेऽनगारिणां शिष्यचौर्यव्यवहार प्रथमोऽस्य प्रावर्त्तत। तदाऽऽचार्या आर्यरक्षितं भट्टं पर्यव्राजयन्। सोऽचिरादेव साक्षीकृतगुरुर्गीतार्थो बभूव। स तीव्रं तपस्तप्यमानो दुःसहान् परीषहान् सहमान एकादशाङ्गानि मातृकावत् पपाठ। तेषामाचार्यमिश्राणां यावान् दृष्टिवादः परिस्फुट आसीत् तावन्तमार्यरक्षितो जग्राह।

तदाऽऽर्यरक्षितो वृद्धजनोक्त्यैवमश्रौषीत्, यत् वज्रर्षेर्दृष्टिवादोऽधुना भूयान् परिस्फुटोऽस्ति। तदा वज्रमुनिः पुर्यां नगर्यां समवसृत आसीत्, इति सोमपुत्रोऽपि मुनिस्तत्र गन्तुं प्रतस्थे। उज्जयिनीमध्ये भद्रगुप्ताचार्याणां प्रतिश्रयं जगाम च। आचार्या गुणवन्तं तपोराशिं पूर्वावस्थाकृतीर्थिकं तमुपलक्ष्य मुदाऽऽलिलिङ्गुः, ऊचुश्च–" हे वत्स! त्वं धन्यः कृतार्थः सुधीश्चासि, यतो यस्त्वं ब्राह्मणतां त्यक्त्वा श्रावकतां स्वीचकर्थ। हे अनघ! अहमद्य क्षीणशेषायुःकर्मा त्वां प्रार्थये, अहमनशनं कर्तुकामोऽस्मीति, त्वमत्र मम निर्यामको भव।" तथेति स्वीकृतवन्तं रौद्रसोमेयं मुनिं भद्रगुप्ताचार्यो विहितानशनोऽपि समुपदिदेश–" हे वत्स! त्वं वज्रस्वामिना सहैकप्रतिश्रये न निवसेः, किन्त्वन्यत्र स्थित्वा पठेः, यतो यः सोपक्रमायुष्को वज्रेण सहैकामपि रात्रिं वसेत् सोऽवश्यं तमनुम्रियते, अत्र न संदेहोऽस्ति।" आर्यरक्षित एवं करिष्यामीत्यङ्गीकृत्य तेषां निर्यामणां विधाय वज्रस्वामिभूषितां नगरीं ययौ। आर्यरक्षितस्तां रात्रिं नगर्यां बहिरेव तस्थौ। वज्रस्वामी राज्यवसानेऽमुं स्वप्नं ददर्श–" मदीयं पयसा पूर्णोऽस्मत्पतद्ग्रहः केनाप्यागन्तुना सर्वपायि किञ्चिन्मात्रं चास्थात्, प्रातःकाले वज्रस्वामी महर्षीणामग्रे स्वप्नार्थं प्राकाशयत् कोऽपि बहुश्रुतप्राही ममातिथिरागमिष्यति, स सुधीरस्मत्तो बहु पूर्वश्रुतं ग्रहीष्यति, पूर्वश्रुतावशेषं तु मत्पार्श्वेऽपि स्थास्यति।" आर्यरक्षितमुनिर्वज्रमुनिसमीपमाययौ, तं गुरुं च

द्वादशावर्तवन्दनेनावन्दत । वज्रर्षिस्तमपृच्छत्–" त्वं कुत आगमः ? । " स चोवाच–" तोसलिपुत्राचार्याणा पादमूलादिहाऽऽगमम् । " वज्रस्वाम्यपृच्छत्–" किं त्व नाम्नाऽऽर्यरक्षितोऽसि ? " स पुनर्वन्दनपूर्वकमेवमित्युवाच । वज्रस्वाम्यपि त प्रसन्न ज्ञात्वोवाच–" तव स्वागतमस्तु " त्व कस्मिन् प्रतिश्रये न्यवात्सी ? " वहिरावासितोऽस्मीति तेनोक्ते स्वामीदमुवाच–" हे महात्मन् ! त्व न जानासि किम् ? बहिस्थः कथ पठिष्यसि ? " सोमपुत्र उवाच–" हे स्वामिन् ! भिन्ने प्रतिश्रय आर्यभद्रगुप्तनिदेशादुदतरम् । " वज्रर्षिरुपयोगेनेद ज्ञात्वोवाच–" एतदुचितम्, ते स्थविरा. पूज्या अन्यथा न वदन्ति "

अथ वज्रर्षि. पृथगावासस्थितमार्यरक्षित प्रतिदिन पूर्वाणि पाठयितुमारेभे । अपूर्वप्रतिभ सोमपुत्रो मुनिरल्पकालेनैवानायासेन नव पूर्वाणि पपाठ । गुरुर्दशम पूर्वं पठितु प्रवृत्तमार्यरक्षित दशमपूर्वयमकानि पठेत्यादिदेश । तत आर्यरक्षितर्षिर्दशमपूर्वस्य बहूनि विषमाणि यमकानि पठितुमारेभे ।

इतश्च पितरावार्यरक्षित सन्दिदिशतु–" किमद्यापि नाऽऽगच्छसि ?, किमस्मान् व्यस्मार्षी ? " त्वमस्माकमुद्योतं करिष्यसीति वयमाशास्महि, तवानागमने सर्वं तमोमय पश्यामः । " तयोरेव सन्देशवचनैराहूयमानोऽप्यार्यरक्षितोऽध्ययनासक्तो न परावृते, तावत्तमाह्वातुमनोभ्या ताभ्या परमप्रियस्तदनुजः फल्गुरक्षित वोधयित्वा प्रैषि । स च द्रुत गत्वा तमार्यरक्षितं नत्वा च जगाद–" त्वमेव कठिनोऽभू, यत्कुटुम्बकेऽनुत्कण्ठितोऽसि । यद्यपि त्वया वैराग्यकुठारेण प्रेमबन्धन छिन्नं, तथापि तव कल्याणनिमित्त कारुण्यमस्ति । सम्प्रति बन्धुवर्गः शोकपङ्कनिमग्नोऽस्ति, तस्मात्तत्रागत्य तमुद्धर्तुं तवोचितम् । तेनानुजेनेत्युक्त आर्यरक्षितस्तत्र गन्तु श्रीवज्रस्वामिनं स्वच्छेन मनसा नत्वाऽपृच्छत् । ततस्तेन पठेत्युक्त. स पुनरधीयानः फल्गुरक्षितेन किं ते विस्मृतोऽस्मीत्यजल्प्यत । बान्धवाश्च परिव्रज्यामनोर-

यस्यारूढास्त्वां सारथिं विना कुत्रापि न प्रवर्तन्ते, तस्मात्त्वमागच्छ, स्वगोत्रिणां जगत्पूजनीयां प्रव्रज्या देहि । श्रेयस्यपि सकर्णोऽपि त्वमद्यापि किं प्रमाद्यसि ? । अथार्यरक्षित उवाच–" यदीद वचन सत्यमस्ति तर्हि हे वत्स ! त्व तावत् प्राणिहित व्रत गृहाण । ततस्ते नैवमुक्तः स श्रद्धानिर्धौतचित्त उवाच–" हे भगवन् ! मह्य व्रत देहि, यत को मूढ पीयूषपानात्पराङ्मुख स्यात् ? " अथाऽऽर्यरक्षित प्रसद्य सज्जमूतवर्षिण्या वाण्या दीक्षया शिक्षयाऽपि च तमनुजमन्वग्रहीत् ।

अन्यदा फल्गुरक्षितेन गन्तुमुक्त आर्यरक्षितोऽधीताशेषयमक पुनर्गुरु व्यजिज्ञपत् । गुरुणा प्राग्वन्निवारित स खेदादित्यचिन्तयत्– " हा स्वजनाह्वानगुर्वाशासङ्कटेऽह पतितोऽस्मि । " पुनरधीमान प्राग्वद्यमकेन पराजित आर्यरक्षित कृताञ्जलिपुटो गुरून्नत्वोवाच–" दश मस्यास्य पूर्वस्य मया कियदधीत कियच्चावशिष्टमिति हे प्रभो ! त्व सप्रसाद कथय । " स्मितविकसिताधरो गुरुरेवमुवाच–" हे वत्स ! त्वया बिन्दुमात्रमधीतम् । इदानीं समुद्रतुल्यमवशिष्टमस्ति । " इति गुरुवचनमाकर्ण्यार्यरक्षितो जगाद–" हे प्रभो ! अहमध्येतु परि श्रान्तोऽत परमध्येतु न समर्थोऽस्मि । " शेषमपि श्रुत त्वमचिरेणाप्यागमयसि, हे धीमन् ! त्व धीरोऽप्यनवसरे किं विषीदसि ? । करुणापरायणेन तेन गुरुणैवमाश्वासित आर्यरक्षितो भग्नोत्साहोऽपि भक्तिभाक् पुनरध्येतु प्रावृतत् । आर्यरक्षितोऽन्येद्युर्मूर्तिमद्दुःखमिव फल्गुरक्षित दर्शयन् गन्तुमुत्कण्ठितो वज्रस्वामिन पुनर्जगाद–" हन्त ! अयमुत्साह्यमानोऽपि कथ गन्तुमना अस्ति ? । " एव विचि-न्तयन् वज्रस्वाम्युपयोगमकरोत् । अथ स इत्यमन्यत–" इतो गृह गतोऽय पुनर्नाऽऽगमिष्यत्येव, ममायुरल्पमस्ति, दशम पूर्व मय्येव स्थास्यति । तेनार्यरक्षितो गमनायानुज्ञात सन् फल्गुरक्षितसहितो दशपुरं नाम पुरं शीघ्र ययौ । स पौरो राजा तत्राऽऽगत त ज्ञात्वा तथा रुद्रसोमायुत सोमश्च भक्त्या वन्दितुमागमत् । ते प्रहर्षाश्रुजलपूर्णनयनास्त मुनिं मूर्तं धर्ममिव प्रणम्य यथास्थानमुपविविशु ।

कारुण्यसागर सोऽपि तेषां धर्मं श्रोतुमिच्छां ज्ञात्वा मेघगम्भीरया गिरा देशनामकार्षीत् । विस्मिता सन्तस्ते राजादयो जनाः श्रवण-पुटपीतदेशनाऽतिविमलजलैर्मनोमलं तत्कालं क्षालयाञ्चक्रुः । अथ राजाऽऽर्यरक्षितपार्श्वे सम्यक्त्वं जग्राह । ततः सपौरस्तं नत्वा स्वगृहं ययौ । रुद्रसोमाऽपि सोमेन बहुभिर्बन्धुभिश्च सह संसारनारकावासविरक्ता सती व्रतमग्रहीत् ।

इतश्च क्षोणितले क्रमाद्विहरन् वज्रस्वामी संयमक्रमचारी दक्षिणापथं ययौ । आनन्दमहाकन्दकन्दलप्ररोहमेघं तं दृष्ट्वा दाक्षिणात्यो लोको मयूर इवाहृष्यत् । तत्रत्या जनास्तद्वीक्षणानन्दनिमग्ना एवं जगदुः, तथाहि—वस्तुतत्त्वानि प्रकाशयन्नयं मुनिः किं सूर्योऽस्ति ?; अथवा किं चकोरचक्षुः प्रीणयश्चन्द्रमा अस्ति ?, अथवा किमस्मत्कर्मप्रभवाद्दृत्तदर्शनो धर्मोऽस्ति ? " इति । अन्येद्युर्वज्रस्वामिनो भृशं श्लेष्मबाधाऽभूत् । तत कञ्चन साधुं शुण्ठीं समानेतुमादिशत् । स्वच्छमनसा साधुनाऽऽनीय दत्ता किन्तु भोजनान्ते स्वाध्याय-ध्यायासक्तचित्ततया तां विसस्मार । शुण्ठीं भोजनानन्तरमेनां भोक्ष्य इति स कर्णे स्थापयामास । ततः प्रदोषे तस्य प्रतिक्रमण-कर्मणि मुखवस्त्रिकया कायं प्रत्यपेक्षयत. कर्णस्था शुण्ठी पपात । खाट्कृत्य पतितां तां वज्रः सस्मार । " हा हा धिग्धिङ्ग ममायं प्रमाद " इति स्वं निनिन्द च । प्रमादे संयमं कथञ्चन निष्कलङ्को न स्यात्, तं विना मानुषं जन्म जीवितं च निरर्थकं स्यात् । ततो वज्रस्वामी दध्यौ " वयं शरीरं त्यजामः । " तदा समन्ताद् द्वादशाब्दकं दुर्भिक्षमभूत् । " यस्मिन् दिने त्वं लक्षमूल्यौदनाद् भिक्षां प्राप्नुयाः, तदुत्तरदिनप्रातःकाले सुभिक्षं जानीयाः, एवमादि वज्रसेनमुनिं स्वशिष्यं समादिश्य स अन्यत्र विहर्तुमुवाच । ततो मुनिश्रेष्ठो वज्रसेनोऽपि ग्रामाकरपुरवनवर्तीं वसुमतीं विहर्तुं प्रववृते । पुनः श्रीवज्रस्वामिपार्श्ववर्तिनो व्रतिनो गृहे गृहे भ्राम्यन्तोऽपि भिक्षां क्वचिदपि न लेभिरे । भिक्षां विना ते क्षुधाक्षामकुक्षयो निरन्नजीवनाः प्रतिदिनं गुरुभिर्दत्तं विद्यापिण्डं बुभुजिरे । युष्माभिरयं विद्यापिण्डो द्वादश-

वर्षाणि भोक्तव्य । ततो यदि संयमबाधा नास्ति, तदा तमाहृत्याह युष्मभ्य ददामि, अन्यथाऽनेन सह वय शरीरं त्यजाम ।” गुरुभिरित्युक्ता धर्ममतयो यतयो जगदु –“ पोषणमिम पिण्ड धिक् !, पोष्यमिद शरीर च धिक् ” हे प्रभो ! त्व प्रसीद वय पिण्ड शरीर चेति द्वितय त्यजाम ! ” अथ गुरुवज्रसूरी वज्रमुनि शिष्यानादाय लोका तरं प्रकाशयितु वेगवान् गिरिम्प्रति चचाल । तत्रैक क्षुल्लको वार्यमाणोऽपि यदा न तस्थौ तदा गुरुस्त कस्मिश्चिद् ग्रामे मुक्तार्थं गिरिं समारोहत् । गुरोर्मनसि प्रीत्यभावो मा भूदिति विचिन्तयन् क्षुल्लको भक्त देह च त्यक्त्वा गिरेरधस्तादस्थात् । मध्याह्नसूर्यप्रचण्डोष्णकिरणतप्ते शिलातले नवनीतपिण्डवत् तत्क्षणादेव विलीनोऽभूत् । शुभध्याननिष्ठ स शक्तिशाली योगीव शरीरं त्यक्त्वा देवमन्दिरमध्ये तन्व तरं परिजग्राह । तस्मिन् देववनितासङ्गसुखाऽऽसक्ते सति प्रहृष्टा देवास्तस्य शरीरं शीघ्र पूजयामासु । अवतरतो देवान् दृष्ट्वा यतय श्रीवज्रस्वामिनमवोचन्–“ हे प्रभो ! सर्वेद्य एते देवा अत्र किमवतरन्ति ? । ” सोऽप्युवाच–“ क्षुल्लक इदानीं निजसाध्यमसाधयत् । ततस्तस्य महिमान देवा प्रकुर्वन्ति । ततस्ते मुनयो दध्यु –“ यदि बालेनाप्यमुना स्वकार्यमसाधि तदा वय वृद्धा किं न स्वकार्यं साधयाम ? ”

अथ संवेगिनश्चारित्रज्ञानयोगिन साधूस्तत्र मिथ्यादृष्टिदेवता श्राविकीभूयैवमुवाच–“ हे भगवन्तो ! भवतामद्य पारण, तत्राऽस्माक शर्कराचूर्णमोदक पान च प्रसद्य गृहीत । ” एतस्या अयमवग्रह प्रीतिहेतुर्नेति वयम यत्र गच्छाम इति ध्यात्वा ते साधव आसन्नमन्यगिरिं जग्मु । साधवस्तत्रत्यदेवतां मनसि निधाय कायोत्सर्गं चक्रु । ततो देवता समागत्य तान् साधूनत्वेत्युवाच–“ अस्माकमुपरि युष्माकमयमनुग्रहोऽस्ति, यतो यूयमिहाऽऽगमत । मत्तु कदापि कल्पवृक्षो न जायते । एव देवतावाचा प्रसन्ना सत्कर्माणस्ते साधव श्रीवज्रस्वामिना सह कृतानशनकर्माण स्वर्गं ययु । अथेन्द्र इति ज्ञात्वा रथेन त गिरिमुपेत्य वज्रस्वाम्यादिमुनीनां शरीराणि हर्षेण

पूजयामासु । तत इन्द्रः सरथो भक्त्या स्वदेहमिव वृक्षादीनुच्चैर्नमयंस्त गिरिं प्रदक्षिणीचकार । तस्मिन् पर्वते शक्रनमितास्ते वृक्षा अद्यापि विनम्रा एव यतो वर्तन्ते, तस्माचस्य रथावर्त इति नाम पृथिव्यामजनि । दुष्कर्मपर्वतवज्रे श्रीवज्रस्वामिनि स्वर्गं गते सति दशमं पूर्वं चतुर्थं संहनन च विच्छिन्नमभूत् ।

इतश्च श्रीवज्रर्षे. शिष्य श्रीवज्रसेनः परिभ्रमन्नपारलक्ष्मीयुतं सोपारनामक नगरं जगाम । तत्र यथार्थनामा जितशत्रुनृप आसीत् । तस्य शिवस्येव दयितेश्वरी नाम्नी तस्य सकलगुणधारिणी धारिणीनाम्नी प्रियाऽऽसीत् । तत्र जिनदत्तनामा घनी श्रावक आसीत् । तस्य शिवस्येव दयितेश्वरी नाम्नी भुवि विख्याताऽऽसीत् । सा चन्द्रधवल तच्छीलमशीलयत् , यत्तस्याः पृथिव्याश्च विभूषण बभूव । तदा दुर्भिक्षदोषात् सकल भूमण्डल धान्यैर्विना जलैर्विना मत्स्या इव दु खसङ्कुलीबभूव । धर्मप्रधाना सा निजबन्धूनेवमुवाच–" अद्य यावदमी वयं सुखं जीविता' स्मः, धान्यक्रयण विना वयं कियच्चिरं दुःख जीवितास्मः । तस्माद्वर सविषमन्न भुक्त्वा समाहिता स्मृतपञ्चनमस्काराः कृतानशनवृत्तयः दु खगेहदेहं सद्यस्त्यजामः, बन्धव इत्थमूचु.–" साम्प्रतमेवं हन्त भवतु, यतो गच्छतोऽस्य शरीरस्याद' प्राप्तकाल फलम् । " अथ लक्षमूल्यमन्न पक्त्वा सा यावद्विष तत्र नाक्षिपत् , तावत्तज्जीवप्रद इव वज्रसेनमुनिरायया । साऽपि त मुनिं दृष्ट्वा हृष्टैव व्यचिन्तयत्–" चित्त वित्तं पात्रं चेति त्रय भाग्येन पूर्णं जातम् । " तस्माद्य पात्राय दत्त्वा स्वजन्मेद सफलीकरोमि, यत ईदृक्पात्रस्य सङ्गमो दैवयोगेन कदाचिद् भवति ।

अथ सा प्रसन्ना सती प्रफुल्लनयना तस्मै मुनये भिक्षा ददौ, लक्षमूल्यस्य पाकस्य वृत्तान्त च निवेदयामास । वज्रसेनोऽपि जगाद– " हे भद्रे ! त्वमेवं मा स्म कार्षीः यतः प्रातरेव सुभिक्ष भविष्यति, अत्र सदेहो नास्ति । सा पप्रच्छ–" एतद्भवता स्वयमज्ञायि, अथवाऽन्यस्मात् ? ।

अथ स मेघगर्जितोर्जितया वाचाऽदो जगाद—“ अहं श्रीवज्रस्वामिनोक्तोऽस्मि—“ यदा त्वं लक्षपाकौदनाद् भिक्षां प्राप्नुयास्तदा तस्मात् सुभिक्षं भवितेति । ” इति श्रवणामृतं श्रुत्वा सा श्राविका तद्दिनं क्षणमात्रमिव लीलया सुदुर्भिक्षं यापयामास । अथ प्रभाते प्रभाबाले सूर्यस्य मण्डलमिव धान्यैः पूर्णं नौकासमुदायं दूरावागच्छत् । ततो जनं सा च सर्व मासीदत् । श्रीवज्रसेनोऽपि कञ्चन समयं तत्रैव तस्थौ । ततो जिनदत्तः स्वकलत्रवरपुत्रसहितोऽर्हन्तं पूजयामास । जिनार्चायां याचकेभ्यो धनं च ददौ । अन्यदिने ते शान्तचित्ता महोत्सवेन श्रीवज्रसेनमुने पार्श्वे लोकद्वयहितं व्रतं लळुः ।

एवं श्रीवज्रस्वामिनो वंशः शाखाप्रशाखाभिर्वटवृक्ष इव शिष्यप्रशिष्यादिभिर्विस्तरन् दिङ्मण्डलं व्यापत् । साधुपत्रः सुपर्वयुक्तो मुक्तावासनिबन्धनं श्रीवज्रमुनिवंशः कस्य मनोरञ्जको नासीत् । ये केचिद्वंशा दृष्टा ये वा श्रुतास्तेषु सर्वेषु वंशेष्वग्रं तनुत्वं मूलं च स्थूलतामभजत् । दशपूर्विणो मुनिराजस्य श्रीवज्रसूरेरसौ वंशः कोऽपि नव्यो य आदौ स्वल्पतरोऽपि पश्चादतितरां ववृधे ।

जम्बूमुनिप्रभृतिवज्रगणाऽधिनाथपर्यन्तसाधुजनचित्रचरित्रपुष्पैः । सद्दामगुम्फितमिदं परिशिष्टपर्व शिष्टात्मनां लुठतु कण्ठतटाऽवनीषु ॥१॥

इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितपद्यात्मकमहाकाव्यस्थविरावलीस्वरूप-परिशिष्टपर्वणः श्रीतपोगच्छाधिपति-
शासनसम्राड्-सूरिचक्रचक्रवर्ति-आचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कार-समयज्ञ-शान्तमूर्ति-आचार्यश्री
विजयविज्ञानसूरीश्वरपट्टधरसिद्धान्तमहोदधि-प्राकृतविबुधविशारदाचार्यश्रीविजयकस्तूरसूरीश्वरशिष्यरत्न
व्याख्यानवाचस्पति-पन्न्यासप्रवरश्रीयशोभद्रविजयगणिवरशिष्यमुनिश्रीशुभङ्करविजयेन विरचिते
गद्यानुवादे आर्यरक्षितप्रवाऽऽज्ञानपूर्वाधिगमवज्रस्वामिस्वर्गगमन तद्वंशविस्तार-
वर्णनात्मकस्त्रयोदशः सर्गः ॥ १३ ॥ समाप्तः ॥ समाप्तश्चायं ग्रन्थः ॥

## ॥ प्रशस्तिः ॥

श्रीमतस्तीर्थनाथस्य महावीरस्य सद्यशाः । श्रीसुधर्मागणधर शिष्योऽभूत्तत्त्वदृग्वर· ॥ १ ॥
अद्याऽपि यद्गीर्गीर्वाणसरिद्धारा विलक्षणा । स्वाऽऽचामाद्यत्सुधाऽऽस्वादं समुक्ति ददते नृणाम् ॥ २ ॥
अद्भुतोऽस्य जगच्चन्द्रो जात. पट्टक्रमाऽम्बरे । यत्कैरवतपोगच्छ प्राकाशि प्रतिभाऽशुभि· ॥ ३ ॥
तत्पट्टसन्ततौ हीरः सूरिरत्नेषु हीरक· । जातोऽकब्बरभूप यो बोधयामास सत्पथम् ॥ ४ ॥
गुरुशिष्यौ सेनदेवौ तत्पट्टेऽभवता क्रमात् । प्रतिवादिविजेतारौ कीर्तिव्याप्तदिगन्तरौ ॥ ५ ॥
तदन्तेवासिवंशेऽभूत् श्रीनेमि· सूरिशेखरः । कदम्बादिमहातीर्थोद्धारख्याताभिधो भुवि ॥ ६ ॥
तदीयपट्टाऽलङ्कारो गुणगौरः प्रतापवान् । श्रीविज्ञानो ज्ञानवृद्धो भूरिभव्यप्रबोधक· ॥ ७ ॥
तस्य पट्टधरो जातः कस्तूरः सूरिपुङ्गव· । समृद्ध्यै प्राकृतस्य स्वप्रतिभाया नियोजकः ॥ ८ ॥
तस्य शिष्यो यशोभद्रः पन्यासपदभूषितः । धर्मव्याख्यासुधास्यन्दैर्जनताऽऽनन्दन· सुधी ॥ ९ ॥
तस्यान्तेवासितालाभसद्भाग्योदययोगवान् । शुभङ्करोऽह विदुषामाराधनकृतार्थधी ॥ १० ॥

हेमचन्द्राऽऽचार्यवर्यनिर्मिते सारवत्तरे । परिशिष्टपर्वग्रन्थे पद्यबन्धेऽल्पमेधसाम् ॥ ११ ॥

दर्शं दर्शं गतिं मन्दाम् तस्य चाऽप्युपयोगिताम् । सौकर्यार्थं गद्यबन्धैरन्ववादिषमादरात् ॥ १२ ॥ युग्मम्

तदेतस्यानुवादस्य गुरवे करुणाब्धये । येन प्राप्त शुभ ज्ञान तस्मायस्तु समर्पणम् ॥ १३ ॥

गुर्जरे वेजलपुरे सुश्रावकगणाऽन्विते । जिनचैत्याऽञ्चिते ग्रामे निवसन् श्रमणाश्रये ॥ १४ ॥

वस्वाऽऽकाशवियन्नेत्रवैक्रमेपाऽन्तके शुचौ । अज्ञसैवैतक ग्रन्थ पूर्णतामहमानयम् ॥ १५ ॥ युग्मम्

यदीममुपयोक्ष्यन्ति श्रद्धावन्त सदाग्रहात् । स्युश्चेदुपकृतास्ते च श्रम मन्ये फलोज्ज्वलम् ॥ १६ ॥

